यतु नः स्वयमेव लक्ष्मीः श्रीरङ्गराजमहि-
षीमधुरैः कटाक्षैः ॥ वैदग्ध्यवर्णगुणगुम्फ-
नगौरवैर्यां कण्डूलकर्णकुहराः कवयो
धयन्ति ॥ ७ ॥ अनाघ्रातावद्यं बहुगुणप-
रीणाहि मनसो दुहानं सौहार्दं परिचित-
मिवाथापि गहनम् ॥ पदानां सौभ्रात्रा-
दनिमिषनिषेव्यं श्रवणयोस्त्वमेव श्रीमह्यं
बहुमुखय वाणीविलसितम् ॥ ८ ॥ श्रि-
यः श्रीश्रीरङ्गेशय तव च हृद्यां भगवतीं
श्रियं त्वत्तोऽप्युच्चैर्वयमिह भणामः शृणु-
तराम् ॥ इशौते भूयास्तां सुखतरलतारे
श्रवणतः पुनर्हर्षोत्कर्षात् स्फुटतु भुजयोः
कञ्चुकशतम् ॥ ९ ॥ देवि श्रुतिं भगव-
तीं प्रथमे पुमांसस्त्वत्सद्गुणौघमणिको-
शगृहं गृणंति ॥ तद्द्वारपाटनपटूनि च से-
तिहाससंतर्कणस्मृतिपुराणपुरः सराणि



श्रीवैकुण्ठनाथ भगवान

नियन्त्रीं श्रीमद्रामायणामपि परं प्राणि-
ति त्वच्चरित्रे ॥ स्मर्तारोस्मज्जनानि यत-
मे सेतिहासैः पुराणैर्निन्युर्वेदानपि च तत-
मे त्वन्माहिम्नि प्रमाणम् ॥ १४ ॥ आ-
कुग्रामनियामकादपि विभोरासर्वनिर्वाह-
कादैश्वर्यं यदि ह्योत्तरोत्तरगुणं श्रीरङ्गभर्तुः
प्रिये ॥ तुङ्गं मङ्गलमुज्ज्वलं गरिमवत्
पुण्यं पुनः पावनं धन्यं यत्तददश्व वीक्ष-
णाभुवस्ते पक्ष्मषा विप्रुषः ॥ १५ ॥ एको
मुक्तातपत्रप्रचुरमणिघणात्कारिमौलिर्मनु-
ष्यो ह्यप्यद्दन्तावलस्थो न गणयति नता-
न् यत् क्षणं क्षोणिपालान् ॥ यत्तस्मै
तिष्ठतेऽन्यः कृपणमशरणो दर्शयन् दन्त-
पङ्क्तिं तत्ते श्रीरङ्गराजप्रणयिनि नयनोद-
ञ्चितन्याञ्चिताभ्याम् ॥ १६ ॥ रतिर्मतिस-
रस्वती धृतिसमृद्धिसिद्धिश्रियः सुधासखि

तारमुखमेतदमुष्य योग्यम् ॥ ५७ ॥ ऐश्वर्य-
मक्षरगतिं परमं पदं वा कस्मै चिदञ्ज-
लिभरं वहते वितीर्य ॥ अस्मै न किञ्चिदु
चितं कृतमित्यथाम्ब त्वं लज्जसे कथय
कोऽयमुदारभावः ॥ ५८ ॥ ज्ञानक्रियाभज-
नसम्पदकिञ्चनोऽहमिच्छाधिकारशकना-
नुशयानभिज्ञः ॥ आगांसि देवि युवयोर-
पि दुःसहानि बध्नामि मूर्खचरितस्तव दु-
र्भरोऽस्मि ॥५९॥ इत्युक्तिकैतवशतेन वि-
डम्बयामि तानम्ब सत्यवचसः पुरुषान्
पुराणान् ॥ यद्वा न मे भुजबलं तव पाद-
पद्मलाभे त्वमेव शरणं विधितः कृतासि
॥ ६० ॥ श्रीरङ्गे शरदां शतं सह सुहृ-
द्वर्गेण निष्कण्टकं निर्दुःखं सुसुखं च दा-
स्यरसिकां भुक्त्वा समृद्धिं पराम् ॥ युष्म-
त्पादसरोरुहान्तररजः स्याम त्वमम्बा पि-

श्रीमद् उत्तर अहोबिल झालरिया पीठाधीश
वैकुण्ठवासी जगद्गुरु श्री १००८ स्वामी
श्री बालमुकुन्दाचार्यजी महाराज·श्री पुष्करजी—

ता सर्वं च त्वमपि त्वमेव भवतः स्वीकुर्वकस्मात् कृपाम् ॥ ६१ ॥ इति श्रीपराशरभट्टारकैर्विरचितं श्रीगुणरत्नकोशस्तोत्रं समाप्तम् ॥ २४ ॥



## * अथ प्रातर्निवेदनकारिकाः । *

श्रीमते रामानुजाय नमः ॥

उत्थाय शयने तस्मिन्नासीनो नियतेन्द्रियः ॥ त्रस्तो निर्विण्णहृदयो व्यर्थं वीक्ष्य गतं वयः ॥ १ ॥ तापत्रयेण चाक्रान्तस्तीव्रेणाध्यात्मिकादिना ॥ दावजेनाग्निना लीढो भ्राम्यन्निव वने मृगः ॥ २ ॥ संसारवागुरान्तस्थो लूनपक्ष इवाण्डजः ॥ अपश्यन्निर्गमोपायमागामिष्वपि जन्मसु ॥ ३ ॥ अकार्यैरति-

श्चतुस्सहस्रयोजनत्वाच्चलक्षयोजनत्वं-
सिद्धम्, दक्षिणोत्तरमपीलावृतस्यचतु-
स्त्रिंशत्सहस्रयोजनत्वादन्येषांषट्र पर्वता-
नां चतुःपञ्चाशत्सहस्रयोजनत्वात्षण्णा-
पर्वतानां द्वादशसहस्रयोजनत्वाच्चलक्षयो-
जनविस्तीर्णेन लवणसमुद्रेणावेष्टितम् ॥
सोऽपिसमुद्रोद्विलक्षयोजनविस्तृतेनप्लक्ष-
द्वीपेनपरिवेष्टितः ॥ प्लक्षद्वीपोऽपितावत्
प्रमाणेनेक्षुसमुद्रेणपरिवेष्टितः एवमेवशा-
ल्मलिकुशक्रौंचशाकपुष्करद्वीपाउत्तरोत्त-
रंपूर्वस्माद्विगुणप्रमाणाद्रष्टव्याः ॥ जम्बू-
प्लक्षःशाल्मलि कुशक्रौञ्चशाकपुष्करद्वी-
पाः। लवणेक्षुसुराघृतदधिदुग्धाम्बुसिन्धु-
संवृताः क्रमशः। व्याख्या॥ सुरासर्पिर्दधिदुग्ध-
शुद्धजलसमुद्राश्च तत्तद्वीपप्रमाणाएवाव-
गन्तव्याः, तत्रप्लक्षादीनां पञ्चानांद्वीपा-

# विषय सूची



पठेत् प्रत्यहं प्रेमतः प्रत्यहं सर्वतः सन्न-तम् ॥ सर्वतः सुन्दरं कर्तृविश्वंभरस्तस्य वश्यो हरिर्जायते सत्वरम् ॥ ६ ॥ इति श्रीमदच्युताष्टकं संपूर्णम् ॥ ५४ ॥

---

॥ श्रीः ॥

# देहलीशस्तुतिः

---

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

विक्रम्य येन विजितानि जगन्ति
भूम्ना विश्वस्य यं परमकारणमामनन्ति ।

लुब्धद्वारदुरासिकापरिभवैस्तोपं जुषेथा मनः ॥ [1]वाचः सीमनि रङ्गधामनि महानन्दोन्नमद्भूमनि स्वामिन्यात्मनि [2]वेङ्कटेश्वरकवेः स्वेनार्पितोऽयं भरः ॥ २६ ॥ दास्यं लास्यवतानुसृत्य मनसा रङ्गेश्वर त्वत्पदे नित्यं किं करवाण्यहं न तु पुनः कुर्यां कदर्याश्रयाम्[3] । मीलच्चक्षुषि वेल्लितभ्रुणि मुहुर्दत्तावमानाक्षरे भीमे कस्यचिदाढ्यकस्य वदने भिक्षाविलक्षां दृशम् ॥ २७ ॥ त्वय्येकाञ्जलिकिंकरे तनुभृतां निर्व्याजमन्वैसहे कल्याणात्मनि रङ्गनाथ कमलाकान्ते मुकुन्दे स्थिते ॥ स्वामिन्पाहि दयस्व [4]देव कुशलिन्नाथ प्रभो भावयेत्यान्तापानवले-

---

१. वाचां सीमनि, वाचामीमनि. २. वेङ्कटेश्वरगुरोः
३. कदर्याश्रयम्. ४. देहि कुशलं दीय.

श्री श्रीनिवास परब्रह्मणे नमः ।
श्री श्रियै नमः ।
श्रीमते विष्वक्सेनाय नमः ।
श्रीमते शठकोपाय नमः ।
श्रीमते रामानुजायनमः ।
श्रीमते वेदान्त महागुरवे नमः ।
श्रीमते बालमुकुन्द महादेशिकाय नमः ।

# ॥ स्तोत्ररत्नावली ॥

## * द्वितिय भाग *

# श्री मुकुन्दमाला स्तोत्रम् ।

घुष्यते यस्य नगरे रङ्गयात्रा दिने दिने ॥ तमहं शिरसा वन्दे राजानं कुल शेखरम् ॥ श्रीवल्लभेति वरदेति दयापरेति भक्तप्रियेति भवलुण्ठनकोविदेति- ॥ नाथेति नागशयनेति जगन्निवासेत्याला-

# शुद्धि पत्रम्

| पृ सं | पं | अशुद्ध पाठ | शुद्ध पाठ | पृ सं | प | अशुद्धपाठ | शुद्ध पाठ |
|---|---|---|---|---|---|---|---|
| १ | ६ | भाग | भाग | २६ | ४ | निघ्रे | निघ्ने |
| ४ | १२ | नरणाम् | नराणाम् | .. | | स्हाद | स्नेहाद |
| ६ | ११ | पयासि | पयासि | . | १८ | तीवाह | तिवाह |
| ७ | १५ | श्रे ो | श्रेयो | २७ | ४ | त्व | इव |
| ९ | ५ | मृत्य | भृत्य | २८ | ६ | भगवा | भगवां |
| . | ६ | तिष्टति | तिष्ठति | ३१ | १५ | त्वायग | त्वायशः |
| १० | २ | शत | श्लथ | ३२ | ७ | नुमन | मुमन |
| ,, | १८ | कृपा | कृपां | | १ | प्रोय | प्राये |
| ११ | १२ | जनाना | जनानां | ३३ | १३ | धाम्त्वया | धास्त्वया |
| १२ | १४ | जगता | जगतां | ३७ | ११ | लाटो | लीढो |
| १३ | ३ | हया | हया | ३९ | १० | युक्ता | युता |
| १४ | १५ | समृय | सभुया | ४० | ९ | प्रातु | प्रातु |
| .. | १६ | हीयता | हीवता | ४१ | ६ | प्राप्त | प्रातः |
| १५ | ८ | तिष्टा | निष्ठा | .. | १४ | चार्यदि | चार्थवि |
| १६ | १३ | स्नुतुं | स्मर्तुं | ४२ | ९ | मथथ | नय |
| १७ | ८ | तद्वारस | तद्वारगा | . | १५ | कराभ्या | कराभ्याम् |
| १९ | ७ | श्रिय | श्रिये | ४३ | ८ | कल्पयेत्र | कल्पयेद्र |
| ... | १५ | यद्गु | यद्व | ४४ | ६ | रव्यं | रव्यं |
| २० | ३ | पोध्दात | पोद्धात | ४६ | ११ | मार्जने | मार्जन |
| .. | १५ | स्वा | स्वा | ४७ | ४ | मन्त्रोप | मन्त्रोप |
| २३ | १५ | न्यञ्चिाता | न्यञ्चिता | . | ८ | गोढाह | गोढ द |
| २४ | ४ | विरज्जिना | विरिञ्चिना | .. | ९ | लब्धा | लब्ध्वा |
| [illegible] | ५ | प्रक्त्रिपम् | प्रक्रियम् | | ११ | नार्ल्थ | [illegible] |
| २५ | ५ | सुति | सृति | . | १६ | भागी | [illegible] |
| ,, | ६ | य रा | यद्गिरां | ४८ | २ | हपि | हवि |
| | | | | ... | ६ | नेष्ठ | नेष्ठ |

पिनं प्रतिपदं कुरु मां मुकुन्द ॥ १ ॥ ज-
यतु जयतु देवो देवकीनन्दनोऽयं जय-
तु जयतु कृष्णो वृष्णिवंशप्रदीपः ॥ जय-
तु जयतु मेघश्यामलः कोमलाङ्गो जय-
तु जयतु पृथ्वीभारनाशो मुकुन्दः ॥ २ ॥
मुकुन्द मूर्ध्ना प्रणिपत्य याचे भवन्तमे-
कान्तमियन्तमर्थम् ॥ अविस्मृतिस्त्वच्च-
रणारविन्दे भवे भवे मेऽस्तु भवत्प्रसादा-
त् ॥ ३ ॥ नाहं वन्दे तव चरणयोर्द्वन्द्वम-
द्वन्द्वहेतोः कुम्भीपाकं गुरुमपि हरे नारकं
नापनेतुम् ॥ रम्या रामा मृदुतनुलता न-
न्दने नाऽभिरन्तुं भावे भावे हृदयभवने
भावयेयं भवन्तम् ॥ ४ ॥ नास्था धर्मे न
वसुनिचये नैव कामोपभोगे यद्यद्भव्यं भ-
वतु भगवन्पूर्वकर्मानुरूपम् ॥ एतत्प्रार्थ्यं
मम बहुमतं जन्मजन्मान्तरेऽपि त्वत्पादा-

म्भोरुहयुगगता निश्चला भक्तिरस्तु ॥५॥
दिवि वा भुवि वा ममास्तु वासो नरके
वा नरकान्तक प्रकामम् ॥ अवधीरि-
तशारदारविन्दौ चरणौ ते मरणेऽपि चि-
न्तयामि ॥ ६ ॥ कृष्ण त्वदीयपदपङ्कज-
पञ्जरान्तमद्यैव मे विशतु मानसराजहं-
सः ॥ प्राणप्रयाणसमये कफवातपित्तैः
कण्ठावरोधनविधौ स्मरणं कुतस्ते ॥७॥
चिन्तयामि हरिमेव सन्ततं मन्दमन्दह-
सिताननाम्बुजम् ॥ नन्दगोपतनयं परा-
त्परं नारदादिमुनिवृन्दवन्दितम् ॥ ८ ॥
करचरणसरोजे कान्तिमन्नेत्रमीने श्रम
मुषि भुजवीचिव्याकुलेऽगाधमार्गे ॥ ह-
रिसरसि विगाह्याऽपीय तेजोजलौघं भ-
वमरुपरिखिन्नः क्लेशमद्यत्यजामि ॥ ९ ॥
सरसिजनयने सशङ्खचक्रे मुरभिदि मा

विरमस्व चित्त रन्तुम् ॥ सुखतरमपरं न जातु जाने हरिचरणस्मरणाऽमृतेन तुल्यम् ॥ १० ॥ मा भैर्मन्द मनो विचिन्त्य बहुधा यामीश्चिरं यातना नामी नः प्रभवन्ति पापरिपवः स्वामी ननु श्रीधरः ॥ आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥ ११ ॥ भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारार्दितानाम् ॥ विषमविषयतोये मज्जतामप्लवानां भवतु शरणमेको विष्णुपोतो नराणाम् ॥ १२ ॥ भवजलधिमगाधं दुस्तरं निस्तरेयं कथमहमिति चेतो मास्म गाः कातरत्वम् ॥ सरसिजदृशि देवे तावकी भक्तिरेका नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥ १३

तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले
दारावर्ते तनयसहजग्राहसङ्घाकुले च ॥
संसाराख्ये महति जलधौ मज्जतां नस्त्रि-
धामन् पादाम्भोजे वरद भवतो भक्ति-
नावं प्रयच्छ ॥ १४ ॥ मा द्राक्षं क्षीणपु-
ण्यान् क्षणमपि भवतो भक्तिहीनान् प-
दाब्जे मा श्रौषं श्राव्यबन्धं तव चरित-
मपास्यान्यदाख्यानजातम् ॥ मा स्मार्षं
माधव त्वामपि भुवनपते चेतसाऽपह्नुवा-
नान् मा भूवं त्वत्सपर्यापरिकररहितो ज-
न्मजन्मान्तरेऽपि ॥ १५ ॥ जिह्वे कीर्तय
केशवं मुररिपुं चेतो भज श्रीधरं पाणि-
द्वन्द्व समर्चयाऽच्युतकथां श्रोत्रद्वय त्वं
शृणु ॥ कृष्णं लोकय लोचनद्वय हरेर्ग-
च्छाङ्घ्रियुग्मालयं जिघ्र घ्राण मुकुन्द-
पादतुलसीं मूर्द्धन्नमाऽधोक्षजम् ॥ १६ ॥

हे लोकाः शृणुत प्रसूतिमरणव्याधेश्चि-
कित्सामिमां योगज्ञाः समुदाहरन्ति मुनयो
यां याज्ञवल्क्यादयः ॥ अन्तर्ज्योतिरमेय-
मेकममृतं कृष्णाख्यमापीयतां तत्पीतं
परमौषधं वितनुते निर्वाणमात्यन्तिकम्
॥ १७ ॥ हे मर्त्याः परमं हितं शृणुत वो
वक्ष्यामि संक्षेपतः संसारार्णवमापदूर्मिब-
हुलं सम्यक्प्रविश्य स्थिताः ॥ नानाज्ञा-
नमपास्य चेतसि नमो नारायणायेत्यमुं
मन्त्रं सप्रणवं प्रणामसहितं प्रावर्तयध्वं
मुहुः ॥ १८ ॥ पृथ्वीरेणुरणुः पयांसि क-
णिकाः फल्गुस्फुलिङ्गो लघुस्तेजो निः
श्वसनं मरुत्तनुतरं रन्ध्रं सुसूक्ष्मं नभः ॥
क्षुद्रा रुद्रपितामहप्रभृतयः कीटाः सम-
स्ताः सुरा दृष्टा यत्र स तावको विजयते
भूमाऽवधूतावधिः ॥ १९ ॥ बद्धेनाञ्जलि-

ना नतेन शिरसा गात्रैः सरोमोद्गमैः
कण्ठेन स्वरगद्गदेन नयनेनोद्गीर्णबा-
ष्पाम्बुना ॥ नित्यं त्वच्चरणारविन्दयुग-
लध्यानामृतास्वादिनामस्माकं सरसीरु-
हाक्ष सततं सम्पद्यतां जीवितम् ॥ २० ॥
हे गोपालक हे कृपाजलनिधे हे सिंधुक-
न्यापते हे कंसान्तक हे गजेन्द्रकरुणा-
पारीण हे माधव ॥ हे रामानुज हे जग-
त्त्रयगुरो हे पुण्डरीकाक्ष मां हे गोपीजन-
नाथ पालय परं जानामि न त्वां विना
॥ २१ ॥ भक्तापायभुजङ्गगारुडमणिस्त्रै-
लोक्यरक्षामणिर्गोपीलोचनचातकाम्बुद-
मणिः सौन्दर्यमुद्रामणिः ॥ यः कान्ता-
मणिरुक्मिणीघनकुचद्वन्द्वैकभूषामणिः श्रे-
यो देवशिखामणिर्दिशतु नो गोपाल-
चूडामणिः ॥ २२ ॥ शत्रुच्छेदैकमन्त्रं सः

कलमुपनिषद्वाक्यसम्पूज्यमन्त्रं संसारो-
च्छेदमन्त्रं समुचिततमसः संघनिर्याणमन्त्रम् ॥ सर्वैश्वर्यैकमन्त्रं व्यसनभुजगसन्दष्टसन्त्राणमन्त्रं जिह्वे श्रीकृष्णमन्त्रं
जप जप सततं जन्मसाफल्यमन्त्रम् ॥२३॥
व्यामोहप्रशमौषधं मुनिमनोवृत्तिप्रवृत्त्यौषधं दैत्येन्द्रार्तिकरौषधं त्रिभुवने संजीवनैकौषधम् ॥ भक्तात्यन्तहितौषधं भवभयप्रध्वंसनैकौषधं श्रेयःप्राप्तिकरौषधं पिब
मनः श्रीकृष्णदिव्यौषधम् ॥२४॥ आम्नायाऽभ्यसनान्यरण्यरुदितं वेदव्रतान्यन्वहं मेदश्छेदफलानि पूर्तविधयः सर्वेहुतं भस्मनि ॥ तीर्थानामवगाहनानि च गजस्नानं विना यत्पदद्वन्द्वाम्भोरुहसंस्मृतिं विजयते देवः स नारायणः ॥ २५ ॥ श्रीमन्नाम प्रोच्य नारायणाख्यं के न प्रापुर्वा-

ञ्छितं पापिनोऽपि ॥ हा नः पूर्वं वाक्प्र-
वृत्ता न तस्मिंस्तेन प्राप्तं गर्भवासादिदुः-
खम् ॥ २६ ॥ मज्जन्मनः फलमिदं मधु-
कैटभारे मत्प्रार्थनीय मदनुग्रह एष एव ॥
त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्यभृत्यस्य भृ-
त्य इति मां स्मर लोकनाथ ॥ २७ ॥ नाथे
नः पुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दातरि सुरे नारायणे
तिष्ठति ॥ यं कंचित्पुरुषाधमं कतिपयग्रा-
मेशमल्पार्थदं सेवायै मृगयामहे नरमहो
मूका वराका वयम् ॥ २८ ॥ मदन परि-
हर स्थितिं मदीये मनसि मुकुन्दपदार-
विन्दधाम्नि ॥ हरनयनकृशानुना कृशो-
ऽसि स्मरसि न चक्रपराक्रमं मुरारेः ॥ २९ ॥
तत्त्वं ब्रुवाणानि परं परस्तान्मधुक्षरन्तीव
सतां फलानि ॥ प्रावर्तय प्राञ्जलिरस्मि

जिह्वे नामानि नारायणगोचराणि ॥३०॥
इदं शरीरं शतसन्धि जर्जरं पतत्यवश्यं
परिणामपेशलम् ॥ किमौषधं पृच्छसि
मूढ दुर्मते निरामयं कृष्णरसायनं पिब
॥ ३१ ॥ दारा वाराकरवरसुता ते तनूजो
विरिञ्चिस्स्तोता वेदस्तव सुरगणा भृत्यव-
र्गः प्रसादः ॥ मुक्तिर्माया जगदविकलं
तावकी देवकी ते माता मित्रं बलरिपुसु-
तस्तत्त्वदन्यं न जाने ॥ ३२ ॥ कृष्णो
रक्षतु नो जगत्त्रयगुरुः कृष्णं नमध्वं सदा
कृष्णेनाखिलशत्रवो विनिहताः कृष्णा-
य तस्मै नमः ॥ कृष्णादेव समुत्थितं ज-
गदिदं कृष्णस्य दासोऽस्म्यहं कृष्णे ति-
ष्ठति विश्वमेतदखिलं हे कृष्ण रक्षस्व
माम् ॥ ३३ ॥ तत्त्वं प्रसीद भगवन् कुरु
मय्यनाथे विष्णो कृपा परमकारुणिकः

खलु त्वम् ॥ संसारसागरनिमग्नमनन्त
दीन मुद्धर्तुमर्हसि हरे पुरुषोत्तमोऽसि ॥३४॥
नमामि नारायणपादपङ्कजं करोमि ना-
रायणपूजनं सदा ॥ वदामि नारायण-
नाम निर्मलं स्मरामि नारायणतत्त्वम-
व्ययम् ॥ ३५ ॥ श्रीनाथ नारायण वा-
सुदेव श्रीकृष्ण भक्तप्रिय चक्रपाणे ॥
श्रीपद्मनाभाच्युत कैटभारे श्रीराम पद्मा-
क्ष हरे मुरारे ॥ ३६ ॥ अनंत वैकुण्ठ
मुकुन्द कृष्ण गोविन्द दामोदर माधवे-
ति ॥ वक्तुं समर्थोऽपि न वक्ति कश्चिदहो-
जनाना व्यसनाभिमुख्यम् ॥ ३७ ॥ ध्या-
यन्ति ये विष्णुमनन्तमव्ययं हृत्पद्ममध्ये
सततं व्यवस्थितम् ॥ समाहितानां सत-
ताभयप्रदं ते यान्ति सिद्धिं परमां तु वैष्ण-
वीम् ॥ ३८ ॥ क्षीरसागरतरङ्गशीकरासा-

स्तारकितचारुमूर्तये ॥ भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः॥३९॥ यस्य प्रियौ श्रुतिधरौ कविलोकवीरौ मित्रे द्विजन्मवरपद्मशरावभूताम् ॥ तेनाम्बुजाक्षचरणाम्बुजषट्पदेन राज्ञा कृता कृतिरियं कुलशेखरेण ॥ ४० ॥ इति श्रीकुलशेखरकृतं मुकुन्दमालास्तोत्रं सम्पूर्णम् ॥ १६ ॥



# अथक्षमाषोडशीस्तोत्रम्।

श्रीमते रामानुजाय नमः ॥

श्रीपराशरभट्टार्य्यः श्रीरङ्गेशपुरोहितः॥ श्रीवत्साङ्कसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥ १ ॥ श्रीरङ्गेश यया करोषि जगतां सृष्टिप्रतिष्ठाक्षयानत्रामुत्र च भो-

ममत्त्वयसुखं मोक्षं च तत्तत्तृषाम ॥
त्वत्स्वातन्त्र्यमपोह्य कल्पितजगत्क्षेमाति-
हृद्या स्वतः क्षान्तिस्ते करुणासखी
विजयतां क्षेमाय सर्वात्मनाम् ॥ २ ॥
पापानां प्रथमोऽस्म्यहं भवति चेच्छास्त्रं
प्रमाणं परं श्रीरङ्गेश न विद्यतेऽत्र विशयः
सन्त्येव ते साक्षिणः ॥ पृष्ट्वा तानधुना
मयोदितमिदं सत्येन गृह्येत चेत् सत्यं
ह्युक्तमिति क्षमस्व भगवन् सर्वं तदस्म-
त्कृतम् ॥ ३ ॥ त्वत्क्षान्तिः खलु रङ्गराज
महती तस्याः पुनस्तोषणे पर्य्याप्तं न
समस्तचेतनकृतं पापं ततो मामकम् ॥
लक्ष्यं नेति न मोक्तुमर्हसि यतः कुत्रापि
तुल्यो मया नान्यः सिद्ध्यति पापकृत्तद-
मया लब्धं तु नोपेक्ष्यताम् ॥ ४ ॥ पुण्यं
पापमिति द्वयं खलु तयोः पूर्वेण यत्सा-

ध्यते तत्त्वविद्भिस्स्मृतिकारकं तनुभृतां रङ्गेश संजायते ॥ पाश्चात्यस्य तु यत् फलं तदिह ते दुःखच्छिदः स्मारकं तेनानेन कृतं तदेव शिशुनेत्यस्मत्कृतं क्षम्यताम् ॥ ५ ॥ पुण्यं यत्तव पूजनं भवति चेत्तत्कर्तुरिष्टे कृते तत्स्याद्रङ्गपते कृतप्रतिकृतं सर्वेऽपि तत्कुर्वते ॥ पापं चेदपराध एव भवतस्तत्कर्तृसंरक्षणे क्षान्तिस्ते निरुपाधिकी निरुपमा लब्धेत तत्क्षम्यताम् ॥ ६ ॥ न द्वित्राणि कृतान्यनेन निरयैर्नोक्तं पुनः कल्पितैः पापानामिति मत्कृते तदधिकान् कर्तुं प्रवृत्ते त्वयि ॥ तेभ्योऽप्यभ्यधिकानि तान्यहमपि क्षुद्रः करोमि क्षणात्तद्यत्नस्तव निष्फलः खलु भवेत्तत्ते क्षमैव क्षमा ॥ ७ ॥ संभूपाखिलपातकैर्बहुविधं स्वं स्वं फलं दीयतां सर्वं सह्य-

मिदं मया त्वयि हरे जाग्रत्यपि त्रातरि ॥ दुःखाक्रान्तमवेक्ष्य मामिह जनो दुष्टाशयस्त्वद्गुणान् क्षान्त्यादीन् प्रति दुर्वचो यदि वदेत्सोढुं न तच्छक्यते ॥ ८ ॥ क्षान्तिर्नाम वरो गुणस्तव महान् श्रीरङ्ग पृथ्वीपते सोऽयं सन्नपि सापराधनिवहाभावे न विद्योतते ॥ तस्मान्नैकविधापराधकरणे निष्ठावता नित्यशः प्राप्नोत्येष मया प्रकाशमतुलं प्राप्स्याम्यहं च प्रथाम् ॥ ९ ॥ मत्पापक्षपणाय योजयसि चेत् घोरेण दण्डेन मां रङ्गाधीश्वर केवलाघकरणाद्दुःखं मम स्यान्महत् ॥ तद्दृष्टुर्भवतोऽपि दुःखमतुलं घोरं दयालोर्भवत् तस्मात्तेऽपि सुखाय मत्कृतमिदं सर्वं त्वया क्षम्यताम् ॥ १० ॥ देव त्वां शरणं प्रपन्नमपि मां दुःखान्यनन्याश्रयं बाधन्ते

यदि सर्वपापनिवहात्त्वां मोक्षयिष्याम्यहम् ॥ इत्युक्तं तव वाक्यमर्थविधुरं जायेत यद्वा भवांस्तत्राशक्त इति प्रथेत हि ततो मां रक्षतु त्वत्क्षमा ॥ ११ ॥ न त्वं क्षाम्यसि चेदिदं मम कृतं नास्त्यत्र काचित् क्षतिः पूर्वं यत्समभूत्तदेव हि पुनर्जायेत तज्जायताम् ॥ यद्वा स्यादधिकं च सोऽपि सुमहाल्लाभोऽस्तु मे तादृशः स्वामिन्दासजनस्तवायमधिकं स्वैरेण दूरी भवेत् ॥ १२ ॥ सोहं क्षुद्रतया जुगुप्सिततमं दुष्कर्म नित्यं स्मरन् कुर्वन्काममशुद्धरीतिरभवं श्रीरङ्गपृथ्वीपते ॥ एतत्ते महतो विशुद्धमनसा स्मृतं न युक्तं खलु क्षान्त्या विस्मर तत्ततोऽहमसुखान्मुक्तो भवेयं सुखी ॥ १३ ॥ तत्तत्कर्मफलानुरूपमखिलो लोकस्त्वया सृज्यते तस्मात्कर्म-

वशंवदत्वमधिकं वक्तुं तवापि क्षमम् ॥ श्रीरङ्गेश्वर तत्प्रशान्तिविधये क्षान्त्या निराकृत्य मे सर्वं पातकमाशु दर्शय भवत्स्वातन्त्र्यमत्युज्ज्वलम् ॥ १४ ॥ श्रीरङ्गेश वचो मदीयमधुना व्यक्तं त्वया श्रूयतां पुण्यं तत्फलसंगमात्रविरहाद्भूयो न मां प्राप्नुयात् ॥ पापं नैव तथा फलं वितनुते शक्यं न तद्वारणां तत्क्षान्त्या तव शक्यमेव तदिदं सद्यस्त्वया कल्प्यताम् ॥ १५ ॥ श्रीरङ्गेश्वर पुण्यपापफलयोः स्वाधीनतां कुर्वतोः सर्वेषां सुखदुःखयोः स्वयमहं मग्नाशयो मामपि ॥ स्मर्तुं न प्रभवामि किं पुनरहं त्वामन्तरन्तः स्थितं तत्ते त्वं क्षमया निरस्य कुरु मे त्वद्ध्यानयोग्यां दशाम् ॥ १६ ॥ अल्पं चेदनपेक्षणीयसरणावारोप्यतां मत्कृतं कि-

च्चिद्भूरि भवेदिदं यदि गुरून् सम्प्रेक्ष्य मे त्यज्यतां। यद्वानन्तमनन्तवैभवजुषो-रङ्गक्षमावल्लभ त्वत्क्षान्त्याः खलु लक्ष्य-तामनुगुणा मानीयतान्तत्त्वया ॥ १७ ॥ श्रीमान्कूरान्ववाये कलशजलनिधौ कौस्तु-भांशोऽवतीर्णः श्रीवेदव्यासभट्टारकतनयवरो रङ्गराजस्य हृद्यः ॥ वेदाचार्य्याग्र्यनामा विदितगुणगणो रङ्गिणः स्तोत्रमेतच्चक्रे नित्याभिजप्यं सकलतनुभृतां सर्वपापा-पनुत्त्यै ॥ १८ ॥ संत्यक्तसर्वविहिताक्रिय-मर्थकामश्रद्धालुमन्वहमनुष्ठितनिन्द्यकृ-त्यम् ॥अत्यन्तनास्तिकमनात्मगुणोपपन्नं मां रङ्गराज कृपया परया क्षमस्व ॥१६॥ इति श्रीक्षमापोडशीस्तोत्रं सम्पूर्णम् ॥ १६ ॥

# अथ श्रीगुणरत्नकोशः ।

श्रीमते रामानुजायनमः ॥

श्रीपराशरभट्टार्य्यः श्रीरङ्गेशपुरोहितः ॥ श्रीवत्साङ्कसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥ श्रियं समस्तचिदचिद्विधानव्यसनं हरेः ॥ अङ्गीकारिभिरालोकैः सार्थयन्त्यै कृतोऽञ्जलिः ॥ १ ॥ उल्लासपल्लवितपालितसप्तलोकीनिर्वाहकोरकितनेमकटाक्षलीलाम् ॥ श्रीरङ्गहर्म्यतलमङ्गलदीपरेखां श्रीरङ्गराज महिषीं श्रियमाश्रयामः ॥ २ ॥ अनुकलतनुकाण्डालिङ्गनारम्भशुम्भत्प्रतिदिशभुजशाखश्रीसखानोकहर्द्धिः ॥ स्तननयनगुलुच्छस्फारपुष्पद्विरेफा रचयतु मयि लक्ष्मीकल्पवल्ली कटाक्षान् ॥३॥ यद्भ्रूभङ्गाः प्रमाणं

स्थिरचररचनातारतम्ये मुरारेर्वेदान्तास्तत्त्वचिन्तां मुरभिदुरसि यत्पादचिह्नैस्तरन्ति ॥ भोगोपोद्घातकेलीचुलकितभगवद्वैश्वरूप्यानुभावा सा नः श्रीरास्तृणीतामम्रृतलहरिधीलङ्घनीयैरपाङ्गैः ॥ ४ ॥ यद्यावत्तव वैभवं तदुचितस्तोत्राय दूरे स्पृहा स्तोतुं के वयमित्यदश्च जगृहुः प्राञ्चो विरिञ्च्यादयः ॥ अप्येवं तव देवि वाङ्मनसयोर्भाषानभिज्ञं पदं का वाचः प्रयतामहे कवयितुं स्वस्ति प्रशस्त्यै गिराम् ॥ ५ ॥ स्तोतारं तमुशन्ति देवि कवयो यो विस्तृणीते गुणान् स्तोतव्यस्य ततश्च ते स्तुतिधुरा मय्येव विश्राम्यति ॥ यस्मादस्मदमर्पणीयभणितिस्वीकारतस्ते गुणाः क्षान्त्यौदार्यदयादयो भगवति स्वां प्रस्तुवीरन् प्रथाम् ॥ ६ ॥ सूक्तिं समग्र-

॥ १० ॥ आहुर्वेदा न मानं कतिचन क-
तिचाराजकं विश्वमेतद्राजन्वत्के चिदीशं
गुणिनमपि गुणैस्तं दरिद्राणामन्ये ॥ भि-
त्तावन्ये सुराजम्भवमितिच जडास्ते त-
लातल्यकार्षुर्ये ते श्रीरङ्गहर्म्याङ्गणकन-
कलते न क्षणं लक्ष्यमासन् ॥ ११ ॥
मनसि विलसिताक्ष्णा भक्तिसिद्धाञ्जनेन
श्रुतिशिरसि निगूढं लक्ष्मि तें वीक्षमा-
णाः॥ निधिमिव महिमानं भुञ्जते येऽपि
धन्या ननु भगवति दैवीं सम्पदं तेऽभि-
जाताः ॥ १२ ॥ अस्येशाना जगत इति
ते धीमहे यां समृद्धिं श्रीः श्रीसूक्तं बहु-
मुखयते तां च शाखानुशाखम् ॥ ईष्टे
कश्चिज्जगत इति यः पौरुपे सूक्त उक्तस्तं
च त्वत्कम्पतिमधिजगावुत्तरश्चानुवाकः
॥ १३ ॥ उद्गाहुस्त्वामुपनिपदसावाहनैकां

यते मुखं चिचलिषेत्तव भ्रूलता ॥ ततोमुखमथेन्दिरे बहुमुखीमहंपूर्विकां विगाह्य च वशंवदाः परिवहन्ति कूलंकषाः ॥१७॥ सह स्थिरपरित्रसव्रजविरिञ्चिनाऽकिंचनैरनोकहवृहस्पतिप्रबलविक्लवप्रक्रियम् ॥ इदं सदसदात्मनां निखिलमेव निम्नोन्नतं कटाक्षतदुपेक्षयोस्तव हि लक्ष्मि तत्ताण्डवम् ॥ १८ ॥ काले शंसति योग्यतां चिदचितोरन्योन्यमालिङ्गतो भूताहंकृतिबुद्धिपञ्चकरणीस्वान्तप्रवृत्तीन्द्रियैः ॥ अण्डानावरणैः सहस्रमकरोत्तान् भूर्भुवःस्वर्वतः श्रीरङ्गेश्वरदेवि ते विहृतये संकल्पमानः प्रियः ॥ १९ ॥ शब्दादीन् विषयान् प्रदर्श्य विभवं विस्मार्य दास्यात्मकं वैषण्या गुणमायया ऽऽत्मनिवहान् विप्लाव्य पर्वः पुमान् ॥ पुंसा पुण्यवधूविडम्बिवपु-

षा धूर्तानिवार्यासयन् श्रीरङ्गेश्वरि कल्पते तव परीह्रासात्मने केलये ॥ २० ॥ यद्दूरे मनसो यदेव तमसः पारे यदत्यद्भुतं यत्कालादपचेलिमं सुरपुरी यद्गच्छतो दुर्गतिः ॥ सायुज्यस्य यदेव सूतिरथवा यद्दुर्ग्रहं यद्गिरा तद्विष्णोः परमं पदं तव कृते मातः समाम्नासिषुः ॥ २१ ॥ हेलायामखिलं चराचरमिदं भोगे विभूतिः परा पुण्यास्ते परिचारकर्मणि सदा पश्यन्ति ये सूरयः॥ श्रीरङ्गेश्वरदेवि केवलकृपानिर्वाह्यवर्गे वयं शेषित्वे परमः पुमान् परिकरा ह्येते तव स्फारणे ॥ २२ ॥ आज्ञानुग्रहभीमकोमलपुरीफालाफलं भेजुषां यायोऽध्यत्यपराजितेति विदिता नाकं परेण स्थिता ॥ भावैरद्भुतभोगभूमगहनैः सान्द्रा सुधास्यन्दिभिः श्रीरङ्गेश्वरगेहल-

क्षिम युवयोस्तां राजधानीं विदुः ॥ २३ ॥
तस्यां च त्वत्कृपावन्निरवधिजनताविश्र-
माहविकाशं संकीर्णां दास्यतृष्णाकलि-
तपरिकरैः पुम्भिरानन्दनिघ्नैः ॥ स्नेहाद-
स्थानरक्षाव्यसनिभिरभयं शार्ङ्गचक्रासि-
मुख्यैरानन्दैकार्णवं श्रीर्भगवति युवयो-
राहुरास्थानरत्नम् ॥ २४ ॥ तत्र स्रक्स्प-
र्शगन्धं स्फुरदुपरिफणारत्नरोचिर्वितानं
विस्तीर्यानन्तभोगं तदुपरि नयता विश्वमे-
काधिपत्यम् ॥ तैस्तैः कान्तेन शान्तोदि-
तगुणविभवैरर्हता त्वामसंख्यैरन्योऽन्या-
द्वैतनिष्ठाघनरसगहनान् देवि वध्नासि भो-
गान् ॥ २५ ॥ भोग्यावामपि नान्तरीय-
कतया पुष्पाङ्गरागैः समं निर्वृत्तप्रणाया-
तिवाहनविधौ नीताः परीवाहताम् ॥ देवि
त्वामनु नीलया सह महीदेव्यः सहस्रं

तथा याभिस्त्वं स्तनबाहुदृष्टिभिरिव स्वा-
भिप्रियं श्लाघसे ॥ २६ ॥ ते साध्याः स-
न्ति देवा जननिगुणविपुर्वेषवृत्तस्वरूपैर्भो-
गैर्वा निर्विशेषाः सवयस इव ये नित्य-
निर्दोषगन्धाः ॥ हे श्रीः श्रीरङ्गभर्तुस्तव
च पदपरीचारवृत्त्यै सदापि प्रेमप्रद्राणभा-
वाविलत्हृदयहठात्कारकैङ्कर्यभोगाः॥२७॥
स्वरूपं स्वातन्त्र्यं भगवत इदं चन्द्रवदने
त्वदाश्लेषोत्कर्षाद्भवति खलु निष्कर्षसम-
ये ॥ त्वमासीर्मातः श्रीः कामितुरिदमित्थं
त्वविभवस्तदन्तर्भावात्त्वां न पृथगभिध-
त्तेश्रुतिरपि ॥ २८ ॥ तव स्पर्शादीशं स्पृश-
ति कमले मङ्गलपदं तवेदं नोपाधेरुपनिप-
तितं श्रीरसि यतः ॥ प्रसूनं पुष्यन्तीमपि
परिमलर्द्धिं जिगदिषुर्नचैवं त्वा देवं स्वद-
त इति कश्चित् कवयते ॥ २९ ॥ अपाङ्गा

भूयांसो यदुपरि परं ब्रह्म तदभूदमी यत्र द्विन्नाः स च शतमखादिस्तदधराक् ॥ अतः श्रीराम्नायस्तदुभयमुशंस्त्वां प्रणिजगौ प्रशस्तिः सा राज्ञो यदपि च पुरीकोशकथनम् ॥ ३० ॥ स्वतः श्रीस्त्वं विष्णोः स्वमसि तत एवैष भगवांस्त्वदायत्तर्द्धित्वेऽप्यभवदपराधीनविभवः ॥ स्वया दीप्त्या रत्नं भवदपि महार्घं न विगुणं न कुण्ठस्वातन्त्र्यं भवति च न चान्याहितगुणम् ॥ ३१ ॥ प्रशकनबलज्योतिर्ज्ञानैश्वर्यविजयप्रथाप्रणतवरणाप्रेमक्षेमङ्करत्वपुरःसराः ॥ अपि परिमलः कान्तिर्लावण्यवीचिरितीन्दिरे तव भगवतश्चैते साधारणा गुणराशयः ॥ ३२ ॥ अन्येऽपि यौवनमुखा युवयोः समानाः श्रीरङ्गमङ्गलविजृम्भणं वैजयन्ति ॥ तस्मिंस्तव

त्वयि च तस्य परस्परेण संस्तीर्णदर्पण इव प्रचुरं स्वदन्ते ॥ ३३ ॥ युवत्वादौ तुल्येऽप्यपरवशताशत्रुशमनस्थिरत्वादीन् कृत्वा भगवति गुणान् पुंस्त्वसुलभान् ॥ त्वयि स्त्रीत्वैकान्तान् मृदिमपतिपारार्थ्य-करुणाक्षमादीन्वा भोक्तुं भवति युवयो-रात्मनि भिदा ॥ ३४ ॥ घनकनकद्युती युवदशामपि मुग्धदशां युवतरुणत्वयोरु-चितमाभरणादि परम् ॥ ध्रुवमसमानदे-शविनिवेशि विभज्य हरौ त्वयि च कुशे-शयोदरविहारिणि निर्विशसि ॥ ३५ ॥ अङ्गं ते मृदु शीतमुग्धमधुरोदारैर्गुणैर्गु-म्फितः क्षीराब्धेः किमृजीषतामुपगताम-न्ये महार्घास्ततः ॥ इन्दुः कल्पलता सु-धामधुमुखा इत्यावलीं वर्णानां श्रीरङ्गेश्व-रि शान्तकृत्रिमकथं दिव्यं वपुर्नार्हति

॥३६॥ प्रणामदनुविधित्सावासनानम्रमग्रे प्रणाति परिचिचीषा कुञ्चितं पार्श्वकेन ॥ कनकनिकषचञ्चच्चम्पकस्रक्समानप्रवरमिदमुदारं वर्ष्म वाचामभूमिः ॥ ३७ ॥ एकं न्यञ्च्य नतिक्षमं मम परं चाकुञ्च्य पादाम्बुजं मध्ये विष्टरपुण्डरीकमभयं विन्यस्य हस्ताम्बुजम् ॥ त्वां पश्येम निषेदुषीं प्रतिकलं कारुण्यकूलङ्कषस्फारापाङ्गतरङ्गमम्ब मधुरं मुग्धं मुखं बिभ्रतीम् ॥३८॥ सुरभितनिगमान्तं वन्दिषीयेन्दिरायास्तव कमलपलाशप्रक्रियं पादयुग्मम् ॥ वहति यदुपमर्द्दैर्वैजयन्तीहिमाम्भः प्लुतिभिरिव नवत्वं कान्तबाह्वन्तराले ॥ ३९ ॥ त्वत्स्वीकारकलावलेपकलुषा राज्ञां दृशो दुर्वचा नित्यं त्वन्मधुपानमत्तमधुपश्रीनिर्भराभ्यां पतिम् ॥ दृग्भ्यामेव

हि पुण्डरीकनयनं वेदो विदामास ते सा-
क्षाल्लक्ष्मि तवावलोकविभवः काक्वा क-
या वर्ण्यते ॥ ४० ॥ आनन्दात्मभिरीश-
मज्जनमदक्षीबालसैरागलत्प्रेमार्द्रैरपि कू-
लमुद्वहकृपासम्प्लावितास्मादृशैः ॥ पद्मे
ते प्रतिबिन्दुबद्धकलिकब्रह्मादिविष्कम्भ-
कैरैश्वर्योद्गमगद्गदैरशरणां मां पालया-
लोकितैः ॥ ४१ ॥ पादारुन्तुदमेव पङ्कज-
रजश्चेटीभृशालोकितैरङ्गम्लानिरथाम्ब
साहसविधौ लीलारविन्दग्रहः ॥ डोला
ते वनमालया हरिभुजे हा कष्टशब्दा
स्पदं केन श्रीरतिकोमला तनुरियं वाचां
विमर्दक्षमा ॥ ४२ ॥ आमर्यादमकण्टकं
स्तनयुगं नाद्यापि नालोकितभ्रूभेदस्मित-
विभ्रमा जहति वा नैसर्गिकत्वायसः ॥
सूते शैशवयौवनव्यतिकरो गात्रेषु ते

सौरभं भोगस्रोतसि कान्तदेशिककरग्राहेण गाहत्तमः ॥ ४३ ॥ आमोदाद्भुतशालियौवनदशाठ्याकोचमम्लानिमत्सौंदर्यामृतसेकशीतलमिदं लावण्यसूत्रार्पितम् ॥ श्रीरङ्गेश्वरिकोमलाङ्गसमनस्सन्दर्भेणां देवि ते कान्तोरः प्रतियत्नमंहति कविं धिङ्मामकाण्डाकुलम् ॥ ४४ ॥ मर्मस्पृशोरसशिराठ्यतिविद्धयवृत्तैः कान्तोपभोगलालितैर्लुलिताङ्गयष्टिः॥ पुष्पावलीव रसिकभ्रमरोपभुक्ता त्वं देवि नित्यमभिनन्दयसे मुकुन्दम् ॥ ४५ ॥ कनकरशनामुक्तातार्टङ्कहारललाटिकामणिसरतुलाकोटिप्रायैर्जनार्दनजीविके ॥ प्रकृतिमधुरं गात्रं जागर्ति मुग्धविभूषणैर्वलयशकलैर्दुग्धं पुष्पैश्च कल्पलता यथा- ॥ ४६ ॥ सामान्यभोग्यमपिकौस्तुभवैज-

यन्तीपञ्चायुधादि रमणाः स्वयमेव बि-
भ्रतु ॥ तद्भारखेदमिव ते परिहर्तुकामः
श्रीरङ्गधाममणिमञ्जरिगाहते त्वां ॥४७॥
यदि मनुजतिरश्चां लीलया तुल्य-
वृत्तेरनुजनुरनुरूपा देवि नावातरिष्यः ॥
असरसमभविष्यन्नर्म नाथस्य मातर्दरद-
लदरविन्दोदन्तकान्तायताक्षि ॥ ४८ ॥
स्खलितकटकमाल्यैर्दोर्भिरब्धिं मुरारेर्भ-
गवति दधिमाथं मथ्नतः श्रान्तिशान्त्यै ॥
भ्रमदमृततरङ्गावर्ततः प्रादुरासीः स्मितन-
यनसुधाभिः सिञ्चती चन्द्रिकेव ॥ ४९ ॥
मातर्मैथिलि राक्षसीस्त्वयि तदैवार्द्रापरा-
धास्त्वया रक्षन्त्या पवनात्मजाल्लघुतरा
रामस्य गोष्ठी कृता ॥ काकं तं च विभी-
षणं शरणमित्युक्तिक्षमौ रक्षतः सा नः
सान्द्रमहागसः सुखयतु क्षान्तिस्तवाक-

कस्मिकी ॥ ५० ॥ मातर्लक्ष्मि यथैव मैथिलजनस्तेनाध्वना ते वयं त्वद्दास्यैकरसाभिमानसुभगैर्भावैरिहामुत्र च ॥ जातां दयितस्तवेति भवतीसम्बन्धदृष्ट्या हरिं पश्येम प्रतियाम याम च परीचारान् प्रहृष्येम च ॥ ५१ ॥ पितेव त्वत्प्रेयान् जननि परिपूर्णागसि जने हितः स्रोतोवृत्त्या भवति च कदाचित् कलुषधीः ॥ किमेतन्निर्दोषः क इह जगतीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसि माता तदसि नः ॥ ५२ ॥ नेतुर्नित्यसहायिनी जननि नस्त्रातुं त्वमत्रागता लोके त्वन्महिमावबोधबधिरे प्राप्ता विमर्दं बहु ॥ क्लिष्टं प्रावसुमालतीमृदुपदं विश्लिष्य वासो वने जातो धिक्करुणां धिगस्तु युवयोः स्वातन्त्र्यमत्यङ्कुशम् ॥ ५३ ॥ अधिशयितवान-

ऽिं नाथो मन्मथं बबन्ध तं हरधनुरसौ वल्लीभञ्जं बभञ्ज च मैथिलि ॥ अपि दशमुखं लूत्वारक्तः कबन्धमनर्त्तयत् किमिव न पतिः कर्ता त्वच्चाटुचुञ्चुमनोरथः ॥ ५४ ॥ दशशतपाणिपादवदनाक्षिमुखैरखिलैरपि निजवैश्वरूप्यविभवैरनुरूपगुणैः ॥ अवतरणैरतैश्च रसयन् कमिता कमले क्वचनहि विभ्रमभ्रामिमुखे विनिमज्जति ते ॥ ५५ ॥ जननभवनप्रीत्या दुग्धार्णवं बहु मन्यसे जननि दयितप्रेम्णा पुष्णासि तत्परमं पदम् ॥ उदधिपरमव्योम्नोर्विस्मृत्य मादृशरक्षणक्षममिति धिया भूयः श्रीरङ्गधामनि मोदसे॥ ५६ ॥ औदार्यकारुणिकताश्रितवत्सलत्व पूर्वेषु सर्वमतिशायितमत्र मातः॥ श्रीरङ्गधाम्नि यदुतान्यदुदाहरन्ति सीताव-

बीभत्सैः क्रियमाणैः कृतैरपि ॥ लज्जितश्च
विषण्णश्च स्मर्यमाणैः स्वकर्मभिः ॥ ४ ॥
अविनीतमशिक्षार्हमसद्गुणगणाकरम् ॥
अवधार्य स्वमात्मानमचिकित्स्याशुभाश्र-
यम् ॥ ५ ॥ दह्यमानेऽन्धनान्तस्थो विस्फु-
रन्निव कीटकः ॥ अलब्धनिर्गमस्तिष्ठन्म-
ध्ये मरणजन्मनोः ॥ ६ ॥ विह्वलश्च वि-
षण्णश्च विमृशन्स्वामिमां दशाम् ॥ चि-
न्तयेत्प्रथमं चैवमाचरन्प्रियमात्मनः ॥ ७ ॥
संसारचक्रमारोप्य बलिभिः कर्मरज्जुभिः ॥
कालेनाकृष्यमाणस्य जङ्गमस्थावरात्मनः
॥ ८ ॥ अहो मे महती याता निष्फला-
जन्मसंततिः ॥ अनाराधितगोविन्दचरणा-
म्भोरुहद्वया ॥ ९ ॥ अनास्वादितसत्कर्म-
ज्ञानभक्तिसुधारसा ॥ अदृष्टानन्तसंसार-
सागरोत्तारणप्लवा ॥ १० ॥ श्रुतिस्मृत्यु-

दिताशेषसदाचारपराङ्मुखी ॥ त्यक्तवर्ण-
समाचारा भ्रष्टा वैदिकवर्त्मनः ॥ ११ ॥
अनुपासितसद्वृद्धा स्वीकृतासत्समागमा ॥
असम्पादितशुश्रूषा गुर्वाचार्यपितृष्वपि
॥ १२ ॥ निजकर्मजदेवादिदेहाध्यस्तात्म-
भावना ॥ तद्भावनानुगोद्भूतसुखदुःखव्यव-
स्थितिः ॥ १३ ॥ असंभूतस्वयाथात्म्यज्ञा-
नजोत्तमनिर्वृतिः ॥ पशुवत्प्राकृतैरेव गु-
णैरधिकनिर्वृता ॥ १४ ॥ न कर्मनिष्ठा
नात्मज्ञा नापि भक्तियुक्ता हरौ ॥ नोद्युक्ता
भक्तिहीनत्वात्तत्क्रियास्वर्चनादिषु ॥१५॥
कर्मभिः पुण्यपापाख्यैरविद्यापरनामभिः॥
धूमैरिवार्चिराग्नेयं ज्ञानमावृत्यदेहिनः
॥ १६ ॥ भूषयित्वा स्वकं देहं शब्दाद्यैः
स्वार्जितैर्गुणैः ॥ दर्शयित्वा स्वसौन्दर्यमा-
त्मने तिष्ठमानया ॥१७॥ निरस्तातिश-

थाह्लादसुखभावैकलक्षणाम् ॥ संच्छाद्य स्त्रगुणैरेवं स्वरूपं परमात्मनः ॥ १८ ॥ गुणमय्या प्रकृत्याख्यभगवन्माययानया ॥ स्वसँल्लीनानन्तजीवकृतकर्मानुरूपया ॥१६॥ गुणत्रयाश्रयानन्तविचित्रपरिणामया ॥ अतिदुस्तरया देवप्रपत्तिरहितात्मभिः ॥ २० ॥ प्रलोभ्यमाना सततं तयैवात्यन्तनिर्वृता ॥ अजानतीव स्वहितं मूकस्वप्नानुकारिणी ॥ २१ ॥ निष्पानीये निरालम्बे निश्छाये निरुपाश्रये ॥ द्राघीयस्यशुभे मार्गे यमस्य सदनं प्रति ॥ २२ ॥ गच्छतो मेऽसहायस्य वर्द्धयन्ती भयं महत् ॥ अतीतापि सदैवैषा तिष्ठतीव पुरो मम ॥ २३ ॥ गतायास्त्वीदृशं रूपं वर्तमानेऽपि जन्मनि ॥ तथैव सुमहान्कालो गतःक्षण इवाल्पकः ॥ २४ ॥ अलब्धसु-

स्वसंस्पर्शमकृताघौघनिष्कृतिः ॥ विनैवं हरिपादार्चामहो पश्यत एव मे ॥ २५ ॥ किं करिष्यामि पदयोर्निपतिष्यामि कस्य वा ॥ २६ ॥ इत ऊर्ध्वमहं तावद्यावज्जीवं श्रियः श्रियः ॥ पदयोरर्चनं कर्तुं यतमानः समाहितः ॥ २७ ॥ अभिगच्छन्हरिं प्रातः पश्चाद् द्रव्याणि चार्जयन् ॥ अर्चयंश्च ततो देवं ततो मन्त्राञ्जपन्नपि ॥ २८ ॥ ध्यायन्नपि परं देवं कालेषूक्तेषु पञ्चसु ॥ वर्तमानः सदा चैवं पाञ्चकालिकवर्त्मना ॥ २९ ॥ स्वार्जितैर्गन्धपुष्पाद्यैः शुभैः शक्त्यनुरूपतः ॥ आराधयन्हरिं भक्त्या गमयिष्यामि वासरान् ॥ ३० ॥ इति वेदान्ताचार्यवि० प्रातर्नि० कारिकाः समाप्ताः ॥ ३१ ॥

श्रीमन्निगमान्तमहादेशिकविरचिता

# यज्ञोपवीतप्रतिष्ठा

कालेस्वाध्याययोग्येशुभकृतिदिवसे-
श्रीपतेर्मन्दिरादौ कृत्वास्नानाद्यनुष्ठांशु-
चिचरणकरोद्भिस्तथाचरूयहृष्टः ॥ दर्भे-
षुप्रागुदग्वोपविशतुशुचिभिर्निर्मितंयज्ञसू-
त्रम् तारेणामन्त्र्यचापस्त्वितितुतदभि-
षिञ्चञ्जपेत्सप्तवारम् ॥ १ ॥ भूरादिव्याहृ-
तीभिस्त्रिगुणितमथथतत्स्वेनमानेनतार-
व्याहृद्भिःप्रोद्यकूर्चोपरिनिहितमथोमार्ज-
येद्दर्भपुञ्जैः ॥ आपोहिष्ठादिमन्त्रैरथचतद-
नुवर्त्योर्ध्वदत्तंकराभ्यां । तारेणव्याहृती-
भिस्त्रिगुणितमथसावित्रमन्त्रेणभूयः ॥२॥
प्राणानांग्रन्थिमन्त्रग्रथितमुपरियद्वामह-
स्तेकराभ्या । भूरग्निभूर्भुवःस्वास्त्विति-

चतदनुवर्त्योत्सृजेद्दर्भपृष्टम् ॥ दर्भास्ती-
र्णप्रदेशेतदुपरिचकुशौप्रास्यहस्ताग्रतालं।
त्रिःकृत्वानावपश्येद्धमदथचतरौयाज्ञिये तं-
निबध्य ॥ ३ ॥ उक्त्वामन्त्रंपितृभ्योनम-
इतिकुटिलंतारतोव्याहृतीभिः । चर्जूकृ-
त्यस्वहस्तेत्रिगुणितमथचावेष्ट्यमध्यांशि-
खाभ्याम् ॥ ताभ्यामावेष्ट्यसूत्रत्रय मपि-
कलयेग्रन्थिकंग्रन्थिमन्त्रात् । अश्वत्थाद्यु-
क्तशाखाविनिहितमथतत्स्थण्डिलेव्रीहि-
युक्ते ॥ ४ ॥ न्यस्तेताम्रादिपात्रेशुभजल
भरितेसूत्रसंवेष्टितेसत् । कूर्चेतारादिम-
न्त्रैर्निहितमुपचितंगन्धपुष्पाक्षताद्यैः ॥आ-
यम्यासून्कारिष्येसकलशुभकृतेयज्ञसूत्रप-
तिष्ठां । संकल्प्येत्थंस्पृशंस्तत्कलयतुसुम-
नाव्याहृतीभिःप्रतिष्ठाम् ॥ ५ ॥ व्यस्ताभिः
संहताभिस्तदनुतदनुगावर्तिताभिःक्रमाद्व ॥

रग्निपर्यायभेदैरभिजपतुपुनःपञ्चभूतासु-
कान्द्यान् ॥ यद्वातारागिनना गाऽशशिपितृ-
विधयोवायुसूर्यादिशेषाः ॥ तन्तूनांदेवता-
स्युर्विधिहरिगिरिशाग्रन्थिदेवाःक्रमेण ॥ ६॥
श्रीशोयज्ञोपवीतस्यचखलुतादिमानाह्वये-
त्तत्रकुम्भे । गन्धाद्यैरर्घ्यपाद्यादिभिरपि-
कलयेदर्चनंवीटिकान्तैः ॥ सत्कारैरर्चयि-
त्वानुविहितमथतद्दर्शयित्वासवित्रे । त्वा-
सत्येनेतिचर्ग्भिश्चतसृभिरथतन्निक्षिपेत्पू-
र्णकुम्भे ॥ ७ ॥ तत्स्पृष्ट्वाष्टोत्तरंवैश्वतमनु-
कलयेत्सूर्यगायत्रजापं । तत्स्वाचान्तस्स-
मन्त्रंहरिदिगभिमुखोधारयेत्सासुयामः ॥
पादौप्रक्षाल्यपाणीशुचिचरणकरोद्विस्त-
थाचम्यदर्भे ष्वासीनोऽसून्नियम्यस्पृश-
तुजपतुचत्र्यम्बकंयज्ञसूत्रम् ॥ ८ ॥ स-
र्षिच्छन्दोऽधिदैवंमनुमथसुजपन्धारयेद्यज्ञ

सूत्रम् । प्रत्येकंमन्त्रआचांतिरथबहुषुचे-
न्नाशुचिर्नावतिष्ठेत् ॥ वेदान्ताचार्यइत्थं-
विविधमुनिमतांयज्ञसूत्रप्रतिष्ठाम् । व्या-
तानीद्वैदिकाध्वास्थितिविहितमतिर्वैधनि-
ष्ठांगरिष्ठाम् ॥ ६ ॥ इतिश्रीकवितार्कि-
कसिंहस्यसर्वतन्त्रस्वतन्त्रस्यश्रीमद्वेङ्कट-
नाथस्यवेदान्ताचार्यस्यकृतिषु यज्ञोपवी-
तप्रतिष्ठासम्पूर्णा ॥



श्रीमन्निगमान्तमहादेशिकविरचिता

# वैश्वदेव कारिका



श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ॥
वेदान्ताचार्यवर्योमे सन्निधत्तांसदाहृदि ॥

स्वाग्निसंस्थाप्यपूर्वंकुशनिचयलस-
त्सँस्तरस्सासुयामः। स्वाकूत्याधिश्रयोक्ति-
प्रतिवचनहविः प्रोक्षणांस्थापनंस्यात् ॥
अन्नंद्वेधोत्तरार्धं त्रिविध विभजितं पश्चि-
मारम्भमन्यत्। भागेद्वेधाविभक्तेहुतभुजि-
जुहुयात्तत्रपूर्वस्थमन्नम् ॥१॥ आद्यैःषड्भिः
सतारैर्मनुभिरथपृथक्पाणिनाहोममग्नौ।
कृत्वातत्रैकदेशंहविरथसमिधंपाश्चमांशेन-
तेन ॥ पश्चादग्नेर्धरण्यांबलिहरणविधौमा-
र्जनप्रोक्षणादेः। पात्रेष्वाहृत्यतोयंक्रमवि-
धिविहितेमार्जनेप्रोक्षणेच ॥ २ ॥ धर्मा-
धर्मादिभेदप्रमुखबलिविधिस्थाननिर्देशनं-
तत्। सर्वंचक्रान्तरस्थंयजनविकृतिगंवे-
दशास्त्रानुरोधम् ॥ पित्र्येरौद्रेचतथास्या-
त्क्रमविधिविहितेमार्जनप्रोक्षणादौ। य-
द्यत्प्राचीनमूत्रंयदपितदितरत्तत्रतीर्थंनिवी-

तम् ॥ ३ ॥ पश्चाद्द्वैहायसस्यप्रथमबलि-
मतोवायसस्याग्रभागे। श्वभ्यांतस्याग्रभा-
गेबलिमथनिविशेदत्रपादात्मशुद्धिः ॥ ध-
र्मादेर्दर्शनंचेदसुखकरमतश्चान्द्रमन्त्रोपवा-
सः । स्याद्द्वैवेपित्र्यभूतद्वययजनविधौप-
श्चिमस्थंहविःस्यात् ॥ ४ ॥ मध्यादुद्धृत्य-
भागान्मनुजयजनमित्यग्रभागेऽग्रदानम्।
कृत्वागोदाहकालन्तपराविधिबलात्तत्रल-
ब्धातिथिभ्यः ॥ दद्याल्लक्ष्मीविशिष्टस्वदि-
तिमपिहविर्यज्ञशिष्टान्नयुक्तम् । कृत्वापा-
द्यासनाद्यैर्विधिवदपचितिंकल्पयित्वाय-
थार्हम् ॥ ५ ॥ सायंरौद्रान्तमन्नाद्यदिहि-
तमशनंपद्यथातत्तथास्यात् । नक्तंचामेन-
तोयाद्यदिमनुजपतस्तच्चरौद्रान्तमाहुः ॥
केचित्वामेनतोयान्मनुजपकरषोडशभिरे-
वाज्यभागे । नक्तंस्यात्सायमेवत्वनशन-

नियतश्राद्धभोक्तुंजनस्य ॥ ६ ॥ धर्मादीशानदत्तंहपिरपिचमनुः पञ्चयज्ञेचदत्तं । भागंरौद्रावशिष्टंमहदनभिमतंत्वातिथेया-न्नदाने ॥ स्वार्थेऽप्यन्नादिकृद्ध्यामिति-नियमविधिश्चाग्रयज्ञादिशिष्टं । सर्वंपित्रोर्मृताहेद्विजमुखहवनेनेष्टमित्याहुरार्याः ॥ ७ ॥ नेत्रेन्दूनयनंयुगंशशिविधूचन्द्राव-ताररुशशी । चन्द्रश्चन्द्रशशीन्दवोऽत्रग-णिताधर्मादिकास्सेचने ॥ तद्दैवेनयनंक्र-मात्पितृमुखेचन्द्रश्चभूतेशशी । मर्त्येन्दुश्च-तथा गृहेहुतवहेपूर्वाहुतीष्वीक्षणम् ॥८॥ इत्थंव्यासपराशरादिमुनिभिस्सिद्धान्तितार्थोऽप्ययम् । श्रीमल्लक्ष्मणयोगियामुनमुखैर्नाथादिभिर्निश्चितः ॥ तत्सर्वंत्ववलोक्यतत्करुणयातद्वैश्वदेवक्रमः । स-न्मोदायचवेङ्कटेशमुनिना ( कविना )

प्रोक्तो भवद्धीमता ॥ ६ ॥ इति श्रीकविकथककण्ठीरवस्यसर्वतन्त्रस्वतन्त्रस्य कृतिषु वैश्वदेवकारिका सम्पूर्णा ॥



श्रीमद्वेदान्तमहादेशिकविरचितौ

## * भूगोल निर्णयस्तद्व्याख्या च *

पञ्चाशत्कोटिभिः स्यान्मितवसुमनितलंयोजनानांतथाहि । स्याज्जम्बूद्वीपमेकंनियुतमुदधिनातावतावेष्टितं तत् ॥ प्लक्षद्वीपेनसोऽपिद्विगुणवितततिनातावतेद्वब्धिनासौ । द्वीपाद्वैगुण्यभाजस्स्वसदृगुदधिभिस्संवृताएवमेव ॥ १ ॥ व्या० ॥ ( पञ्चाशत्कोटिभिस्या ) दिति-तत्रकटाहभित्तिःकोटियोजनमाना, अण्डकटाहान्तरविवरंपञ्चाशत्कोटियोजनोच्छ्रित-

म्, पञ्चाशत्कोटिविस्तीर्णांच, तत्रभूर्भुवः स्वर्महर्जनस्तपस्सत्याख्यानिसप्तभुवनानि, तत्रपंचाशत्कोटिविस्तीर्णाभूमिः, तथाहि ॥ जम्बूद्वीपंलक्षयोजनाविस्तीर्णम्, तच्चनववर्षविभागयुक्तं, तानिचभरतकिंपुरुषहरिवर्षेलावृतरम्यकाहिरणवत्कुरुभद्राश्वकेतुमालनामकानि, वर्षपर्वताश्चहिमवद्धेमकूटनिषधनीलश्वेतशृङ्गिमाल्यवग्दन्धमादनाख्याअष्टौ, तत्रहिमवद्धेमकूटनिषधामेरोर्दक्षिणपर्वताः, नीलश्वेतशृङ्गिणउत्तरपर्वताः माल्यवान् प्राचीनः, गन्धमादनस्तुपश्चिमइति, तत्रमाल्यवत् गन्धमादन व्यतिरिक्ताः षट्पर्वताः द्विसहस्रयोजनाच्छ्रायाद्विसहस्रयोजनविविस्ताराश्च। माल्यवद्गन्धमादनौतुएकसहस्रयोजनोच्छ्रायौतावद्विस्तारिणौ ॥ पू-

वैषट्पर्वताश्रापूर्वपश्चिमसमुद्रायाताः तत्र-
मध्यौनीलनिषधौलक्षयोजनायातौहेमकू-
टश्वेतौतुनवतिसहस्रायातौ ॥ हिमवच्छृङ्गि-
णौतुअशीतिसहस्रायातौ ॥ जम्बूद्वीपस्य-
परिमण्डलादेवंपरिमाणोपचयः ॥ माल्य-
वद्गंधमादनौतु अनीलनीलनिषधायातौ
चतुस्त्रिंशत्सहस्रयोजनोन्नतौच, वर्षेष्वपि-
भरतकिंपुरुषहरिवर्षाणिमेरोर्दक्षिणानि,-
रम्यक हिरण्वत्कुरुवर्षाणिमेरोरुत्तराणि
भद्राश्ववर्षंपाचीनं, केतुमालवर्षं पश्चिमं,
मध्यमंत्विलावृतवर्षम् , तस्यचमध्येमेरु-
श्चतुरशीतियोजनो च्छ्रायः, अधष्षोडश-
सहस्रयोजनोनिमग्नः षोडशसहस्रयोज-
नविस्तीर्णः, उपरिद्वाविंशत्सहस्रयोजन-
विस्तीर्णः, भूपद्मस्यमेरुः कर्णिकाकारः
मेरोश्चतुर्दिशंनवसहस्रयोजनविस्तारःस-

चसहस्रयोजनविस्तारः इति इलावृतंस-
र्वतश्चतुस्त्रिंशद्योजनानीलनिषधांतन्तुच-
तुस्त्रिंशत्स्यहस्रयोजनानि, अन्यानिषड्व-
र्षाणिप्रत्येकंनवसहस्रयोजनविस्तृतानि,
दक्षिणोत्तरंप्राक्पश्चिमाविस्तृतंभद्राश्वव-
र्षं माल्यवत्समुद्रान्तंद्वात्रिंशत्सहस्रयोज-
नविस्तृतं, आनीलनिषधान्तंचतुस्त्रिंशत्स-
हस्रयोजनविस्तृतं गन्धमादनसमुद्रान्तं-
न्तुद्वाविंशत्सहस्रयोजनविस्तृतम् अनील
निषधांतन्तुचतुस्त्रिंशत्सहस्रयोजनानि अ-
न्यानि षड्वर्षाणिप्रत्येकं नवसहस्रयोजन-
विस्तृतानि दक्षिणोत्तरंप्राकपश्चिमं त्वा-
समुद्रान्तानीति विवेकः एवंजम्बूद्वीपस्य-
प्राकपश्चिम भद्राश्वकेतुमालयोश्चतुष्ष-
ष्टिसहस्रयोजनत्वादिलावृतस्य चतुस्त्रिंश-
त्सहस्रयोजनत्वान्माल्यवद्गन्धमादनयो-

नाउभयतस्ससमुद्रान्तायातैस्ससप्तकुल पर्वतैः
सप्तवर्षाणिद्रष्टव्यानि, पुष्करद्वीपस्तुम-
ध्येवलयाकारःपञ्चाशत्सहस्रयोजनोच्छ्रा-
यः, तावद्विस्तृतेनमानसोत्तरपर्वतेनव-
र्षद्वयविभागयुक्तः, एवं मेरोरेकतस्स-
प्तानां समुद्राणांसप्तविंशतिलक्षोत्तरको-
टियोजनविस्तृतत्वाद्द्वीपानांचसपञ्चाश-
त्सहस्रषड्विंशतिलक्षोत्तरकोटियोजनवि-
स्तृतत्वात्स्वादूदकसमुद्रात्परवेलांतंसपञ्चा-
शत्सहस्र त्रिपञ्चाशल्लक्षोत्तरकोटिद्वययो-
जनपरिमितत्वं द्रष्टव्यंएवञ्चसतिसमुद्रा-
णांसप्तद्वीपानामायामप्रमाणेनसप्तलक्षो-
त्तरपञ्चकोटिपरिमितत्वमवगतव्यम्॥२॥
सप्तद्वीपसससिन्धुंद्विगुणागुणितयास्वर्णभूम्या-
परीतं। लोकालोकाद्रिणासाप्ययुतवित-
तिनातावदुच्चेनवीता ॥ लोकालोकाच्च-

मेरोर्भवतिहिधरणीयावतीध्वान्तभूम्या ।
तावत्यासौवृतस्साप्युदकपरिधिनासापि-
वेधोण्डभित्या ॥ ३ ॥ व्या० एतच्चसमु-
द्रंसप्तद्वीपंस्वद्विगुणप्रमाणयाकाञ्चनभू-
म्यावृतम्, साचलोकालोकपर्वतेनयोज-
नायुतोच्छ्रायेणतावद्विस्तारिणाचसर्वतः
परिवेष्टिता, एवंचमेरो रेकतोलोकालो-
कान्तंसपंचाशत्सहस्रसप्तषष्टिलक्षोत्तर-
द्वादशकोटिपरिमितत्वंसिद्धम्, लोका-
लोकोऽपिआलोकलोकान्तंयावत्प्रमा-
णाभूस्तावत्प्रमाणयैवतमोभूम्या समा-
वृतः ततः परमण्डकटाहइति एवंचमेरोर-
कतोअण्डकटाहान्तंपंचत्रिंशल्लक्षोत्तरपंच-
विंशतिकोटियोजनानिभवन्ति तत्रपंच-
त्रिंशल्लक्षयोजपरिमितंगर्भोदकं अन्यत्तु
पंचविंशतिकोटियोजनपरिमितंभूमण्ड-

लम् एवंमेरोश्चतुर्दिशंद्रष्टव्यमितिपंचा-
शत्कोटिविस्तीर्णा भूमिः एवंभूमण्डलम्,
तदूर्ध्वंचाधश्चसर्वत्राराडकटाहः तद्विवर-
स्यपंचाशत्कोटिविस्तीर्णत्वमवबोद्धव्यम् ॥
सप्तद्वीपसमुद्रैस्सहमुनिनियुतैःकोटिभिःपं-
चभिस्स्यात् । लोकालोकाद्रिमेर्वन्तरम-
पिरविभिःकोटिभिःसप्तषष्ट्या । लक्षैः
पंचायुतैस्स्यादथशरनयनैःकोटिभिर्भूतरा-
मैः लक्षैस्स्यात्चक्रवालान्तरममरशिखर्यं-
डभित्योश्चमध्यम् ॥ ४ ॥ शरनेत्रकोटि
भिर्भूपरिधिजलबाणवह्निलक्षैस्स्यात् ॥
अभितोमेरोरेवंपंचाशत्कोटियोजनाभूमिः
॥ ५ ॥ व्या० एषाचभूमिः सप्ततिस-
हस्रयोजनोच्छ्राया, अस्याभूमेःर्विव-
ररूपाणि अतलवितलनितलगभ-
स्तिमन्महातलसुतल पातालानिसप्त

प्रत्येकंनवसहस्रयोजनोच्छ्रायाणि, मध्ये-मध्येभूमण्डलादधश्चप्रत्येकमेकसहस्रयो-जनोच्छ्रायत्वंभुवः एतस्याभुवोऽधस्ताच्छे-षलोकः ततश्रधस्ताग्दर्भोदकंततोनरका-श्च एततूकिंचिन्न्यूनद्विलक्षोनपंचविंशतिको-टियोजनोच्छ्रायम् "सूर्याण्डगोलयोर्म-ध्ये कोट्यःस्युः पंचविंशति" रितिश्रीभा-गवतश्लोकमर्यादयाएवंपरिमाण मवसे-यम् ॥ ४ ॥ ५ ॥ लक्षेसूर्येन्दुताराःज्ञक-विकुजसुराचार्यमन्दाद्विलक्षे। लक्षेसप्त-र्षयोऽथध्रुवइहनियतंत्वन्तरिक्षंभुवःस्यात् ॥ अन्यान्याब्धीन्दुलक्षाण्यथशशिनयना-ष्टार्ककोट्यान्यलोका। ध्वान्तंन्यूनाद्विको-टीत्युपरिसवितृतोऽण्डंहिभूताक्षिकोट्यः॥६॥ शैलैःपातालरन्ध्रै र्नवदशशतकैस्सप्तभि-र्भूरधोधो। मध्येमध्येसहस्रैर्भवतिहितदध-

ङ्शेषलोकोजलंच । तस्याधोनारकास्युस्त-
दिदमिषुद्दशः कोटयःकिंचिदूनाः । पंचाश-
त्कोटितुङ्गंविततमिदमतोह्यराडभित्तिस्तु-
कोटिः ॥ ७ ॥ ॥ व्या० ॥ भूमेरुपरिलक्ष-
योजनसूर्यमण्डलावस्थानाद्भूमराडलस्य-
सप्ततिसहस्रयोजनोच्छ्रितत्वादवशिष्टा-
नांभुवनानांभूमेरोरधएवद्रष्टव्यत्वाद्भूमेरुप-
रिष्टाल्लक्षयोजनेसुर्यमराडलंएतच्चभुवर्लो-
कइतिगीयते सूर्यस्योपरिलक्षयोजने च-
न्द्रमराडलं, तदुपरिलक्षयोजनेनक्षत्रम-
राडलम् ततोद्विलक्षयोजनेबुधः, ततोद्वि-
लक्षेशुक्रः, ततोलक्षद्वयेऽङ्गारकः, तदुपरि
लक्षद्वयेबृहस्पतिः, ततोद्विलक्षेशनिः तदु-
परिलक्षयोजनेसप्तर्षिमराडलम्, सप्तर्षि-
मराडलोपरिष्टाल्लक्षेज्योतिश्चक्राधारभूतो
ध्रुवःएवंसवितृमण्डलस्योपरिध्रुवपर्यन्तंच-

तुर्दशलक्षोत्सेधःस्वर्लोकः ॥ सप्तर्षिम-
ण्डलस्योर्ध्वंध्रुवमण्डलपर्यन्तंकश्चिद्विष्णु-
लोकःध्रुवमण्डलस्योपरिमहर्लोकः कोटि-
योजनोत्सेधः ततोजनोलोकोद्विकोटियो-
जनोच्छ्रायः तपोलोकोऽष्टकोटियोजनो-
च्छ्रायः सत्यलोकस्तुद्वादशकोटियोजनो-
च्छ्रायः एवंध्रुवादुपरिसत्यलोकोर्ध्वसी-
मान्तंत्रयोविंशतिकोटियोजनानिभवन्ति
ततउपरिकिंचिदूनकोटिद्वययोजनंतमः
ततःपरमण्डकटाहइतिएवंसूर्याण्डगोलक-
टाहयोर्मध्येपंचविंशति कोटियोजनत्व-
मूर्ध्वमधश्चेत्यण्डकटाहान्तरविवरोच्छ्रा-
यस्यपञ्चाशत्कोटियोजनत्वंसिद्धम् ॥इति
श्रीकवितार्किकसिंहस्यसर्वतन्त्रस्वतन्त्र-
स्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य-
कृतिषुभूगोलनिर्णयस्तद्वयाख्याचसम्पू-

र्णौ ॥ कवितार्किकसिंहायकल्याणगु-
णशालिने ॥ श्रीमतेवेङ्कटेशाय वेदा-
न्तगुरवेनमः ॥ २ ॥



# वरदराजपञ्चाशत् ॥



श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

द्विरदशिखरिसीम्ना सद्मवान्पद्मयो-
नेस्तुरगसवनवेद्यां श्यामळो हव्यवाहः ।
कलशजलधिकन्यावल्लरीकल्पशाखी क-
ल्पयतु कुशलं नः कोऽपि कारुण्यराशिः
॥ १ ॥ यस्यानुभावमधिगन्तुमशक्नुवन्तो
मुह्यन्त्यभङ्गुरधियो मुनिसार्वभौमाः । त-
स्यैव ते स्तुतिषु साहसमश्नुवानः क्षन्त-

ऽय एष[1] भवता करिशैलनाथ ॥ २ ॥
जानन्ननादि विहितानपराधवर्गान् स्वा-
मिन्भयात्किमपि वक्तुमहं न शक्तः।
अव्याजवत्सल तथापि निरङ्कुशं मां
वात्सल्यमेव भवतो मुखरीकरोति ॥ ३ ॥
किं व्याहरामि वरद स्तुतये कथं वा ख-
द्योतवत्प्रलघुसंकुचितप्रकाशः। तन्मे स-
मर्पय मतिं च सरस्वतीं च त्वामञ्जसा
स्तुतिपदैर्यदहं धिनोमि ॥ ४ ॥ मच्छक्ति-
मात्रगणने किमिहास्ति शक्यं शक्येन
वा तव करीश किमस्ति साध्यम्। यद्य-
स्ति साधय मया तदपि त्वया वा[2] किं
वा भवेद्भवति किंचिदनीहमाने ॥ ५ ॥
स्तोत्रं मया विरचितं त्वदधीनवाचा त्व-
त्प्रीतये वरद यत्तदिदं न चित्रम्। आव-

---

१. एष. २. त्वयैव.

जयन्ति हृदयं खलु शिक्षकाणां मंजूनि पंजरशकुन्तविजल्पितानि ॥ ६ ॥ यं चक्षुषामविषयं हयमेधयज्वा द्राघीयसा सुचरितेन ददर्श वेधाः । तं त्वां करीश करुणापरिणामतस्ते भूतानि हन्त निखिलानि निशामयन्ति ॥ ७ ॥ तत्तत्पदैरुपहितेऽपि तुरङ्गमेधे शक्रादयो वरद पूर्वमलब्धभागाः । अध्यक्षिते मखपतौ त्वयि चक्षुषैव हैरण्यगर्भहविषां रसमन्वभूवन् ॥ ८ ॥ सर्गस्थितिप्रळयविभ्रमनाटिकायां शैलूषवद्विविधवेषपरिग्रहं त्वाम् । संभावयन्ति हृदयेन करीश धन्याः संसारवारिनिधिसंतरणैकपोतम् ॥ ९ ॥ प्राप्तोदयेषु वरद त्वदनुप्रवेशात्पद्मासनादिषु शिवादिषु कंचुकेषु । तन्मात्रदर्शनविलोभितशेमुषीकास्तादात्म्यमूढमतयो निप-

तन्त्यधीराः ॥ १० ॥ मध्ये विरिंचिशिव-
योर्विहितावतारः ख्यातोऽसि तत्त्वमतया
तदिदं[1] न चित्रम् । मायावशेन मकरा-
दिशरीरिणां त्वां तानेव पश्यति करीश
यदेष लोकः ॥ ११ ॥ ब्रह्मेति शंकर
इतीन्द्र इति स्वराडित्यात्मेति सर्वमिति
सर्वचराचरात्मन् । हस्तीश सर्ववचसाम-
वसानसीमां त्वां सर्वकारणमुशन्त्यनपा-
यवाचः ॥ १२ ॥ आशाधिपेषु गिरिशेषु
चतुर्मुखेष्वप्यव्याहता विधिनिषेधमयी
तवाज्ञा । हस्तीश नित्यमनुपालनलङ्घ-
नाभ्यां पुंसां शुभाशुभमयानि फलानि
सूते ॥ १३ ॥ [2]त्रातापदि स्थितिपदं
भरणं प्ररोहश्छाया करीश सरसानि फ-
लानि च त्वम् । शाखागतत्रिदशवृन्दश-

---

१. यदिद २. त्राता भीत.

कुन्तकानां किं नाम नासि महता निग-
मद्रुमाणाम् ॥ १४ ॥ सामान्यबुद्धिजन-
काश्च सदादिशब्दास्तत्त्वान्तरभ्रमकृत-
श्च शिवादिवाचः । नारायणो त्वयि क-
रीश वहन्त्यनन्यमन्वर्थवृत्तिपरिकल्पित-
मैककण्ठ्यम् ॥ १५ ॥ संचिन्तयन्त्यखि-
लहेयविपक्षभूतं शान्तोदितं शमवता
हृदयेन धन्याः । नित्यं परं वरद सर्वगतं
सुसूक्ष्मं निष्पन्दनन्दशुमयं भवतः स्वरूपम्
॥ १६ ॥ विश्वातिशायि सुखरूप यदात्म-
कस्त्वं व्यक्तिं करीश कथयन्ति तदात्मि-
कां ते । येनाधिरोहति मतिस्त्वदुपासकानां
सा किं त्वमेव तव वेति वितर्कडोळाम्
॥ १७ ॥ मोहान्धकारविनिवर्तनजागरूके
के दोषा दिवापि निरवग्रहमेधमाने ।
त्वत्तेजसि द्विरदशैलपतेऽवमृष्टे श्लाघ्येत

संतमसपर्व[1] सहस्रभानोः ॥ १८ ॥ रूढ
स्य चिन्मयतया हृदये करीश स्तम्बानु-
कारिपरिणामविशेषभाजः । स्थानेषु जा-
ग्रति चतुर्ष्वपि सत्त्ववन्तः शाखाविभाग-
चतुरे तव चातुरात्म्ये ॥ १९ ॥ नागाच-
लेश निखिलोपनिषन्मनीषामञ्जूषिका-
मरकतं परिचिन्वतां त्वाम् । तन्वी हृदि
स्फुरति कापि शिखा मुनीनां सौदामनी-
व निभृता नवमेघगर्भा ॥ २० ॥ औद-
न्वते महति सद्मनि भासमाने श्लाघ्ये च
दिव्यसदने तमसः परस्मिन् । अन्तः क-
ळेबरमिदं सुषिरं सुसूक्ष्मं जातं करीश
कथमादरणास्पदं ते ॥ २१ ॥ बालाकृते-
र्वटपलाशमितस्य यस्य ब्रह्माण्डमण्डल-
मभूदुदरैकदेशे । तस्यैव तद्वरद हन्त कथं

1. संतमसमत्र

प्रभूतं वाराहमास्थितवतो वपुरद्भुतं ते ॥ २२ ॥ भक्तस्य दानवशिशोः परिपालनाय भद्रां नृसिंहकुहनामधिजग्मुषस्ते । स्तम्भैकवर्जमधुनापि करीश नूनं त्रैलोक्यमेतदखिलं[1] नरसिंहगर्भम् ॥ २३ ॥ कामन् जगत्कपटवामनतामुपेतस्त्रेधा करीश स भवान्निदधे पदानि । अद्यापि जन्तव इमे विमलेन यस्य पादोदकेन विधृतेन शिवा भवन्ति ॥ २४ ॥ येनाचलप्रकृतिना रिपुसंक्षयार्थी वारां निधिं वरद पूर्वमलङ्घयस्त्वम् । तं वीक्ष्य सेतुमधुनापि शरीरवन्तः सर्वे षडूर्मिबहुळं जलधिं तरन्ति ॥ २५ ॥ इत्थं करीश दुरपह्नवदिव्यभव्यरूपान्वितस्य विबुधादिविभूतिसाम्यात् । केचिद्विचित्रचरिताः

१ त्रैलोक्यमेव निखिल,

-भवतोऽवतारान् सत्यान्दयापरवशस्य विदन्ति[१] सन्तः ॥ २६ ॥ सौशील्यभावितधिया भवता कथंचित्संछादितानपि गुणान्वरद त्वदीयान् । प्रत्यक्षयन्त्यविकलं तव संनिकृष्टाः पत्युस्त्विषामिव पयोदवृतान्मयूखान् ॥ २७ ॥ नित्यं करीश तिमिराविलदृष्टयोऽपि सिद्धाञ्जनेन भवतैव विभूषिताक्षाः । पश्यन्त्युपर्युपरि संचरतामदृश्यं मायानिगूढमनपायमहानिधिं त्वाम् ॥ २८ ॥ सद्यस्त्यजन्ति वरद त्वयि बद्धभावाः पैतामहादिषु पदेष्वपि भावबन्धम् । कस्मै स्वदेत सुखसंचरणोत्सुकाय कारागृहे कनकशृङ्खलयापि बन्धः ॥ २९ ॥ हस्तीश दुःखविषदिग्धफलानुबन्धिन्याब्रह्मकीटमपराहतसंप्रयोगे ।

१ प्रवदन्ति.

दुष्कर्मसंचयवशाद्दुरतिक्रमे नः प्रत्यस्त्र मञ्जलिरसौ तव निग्रहास्त्रे ॥ ३० ॥ त्वद्भक्तिपोतमवलम्बितुमक्षमाणां पारं परं वरद गन्तुमनीश्वराणाम्। स्वैरं विलङ्घयिषतां भववारिराशिं त्वामेव गन्तुमसि सेतुरभङ्गुरस्त्वम् ॥ ३१ ॥ आश्रान्तसंसरणघर्मनिपीडितस्य भ्रान्तस्य मे[1] वरद भोगमरीचिकासु। जीवातुरस्तु निरवग्रहमेधमानो[2] देव त्वदीयकरुणामृतदृष्टिपातः ॥ ३२ ॥ अन्तःप्रविश्य भगवन्नखिलस्य जन्तोराशैदुषस्तव करीश भृशं दवीयान्। सत्यं भवेयमधुनापि स एव भूयः स्वाभाविकी तव दया यदि नान्तरायः ॥ ३३ ॥ अज्ञातनिर्गममनागमवेदिनं मा[3]मन्धं न किंचिदवलम्बनमश्नु-

१, विषयभोग... २, निरवग्रहञ्जृम्भमाणा. ३. मन्यत्र किं...

वानम् । एतावतीं गमयितुः पदवीं दयाळोः शेषाध्वक्लेशनयने क इवातिभारः ॥ ३४ ॥ भूयोऽपि हन्त वसतिर्यदि मे भवित्री याम्यासु दुर्विषहवृत्तिषु यातनासु । सम्यग्भविष्यति ततः शरणागताना संरक्षितेति विरुदं वरदं त्वदीयम् ॥३५॥ पर्याकुलं महति दुःखपयोनिधौ मां पश्यन्करीश यदि जोषमवस्थितस्त्वम् । स्फारेक्षणाऽपि मिषति त्वयि निर्निमेषं पारे करिष्यति दया तव दुर्निवारा ॥ ३६ ॥ किं वा करीश कृपणे मयि रक्षणीये धर्मादिबाह्यसहकारिगवेषणेन । नन्वस्ति विश्वपरिपालनजागरूकः संकल्प एव भवतो निपुणः सहायः ॥ ३७ ॥ निर्यन्त्रणं परिणमन्ति न यावदेते नीरन्ध्रदुष्कृतभवा दुरितप्ररोहाः । तावन्न चेत्त्वमुपग-

च्छसि शार्ङ्गधन्वा शक्यं त्वयापि न हि वारयितुं करीश ॥ ३८ ॥ यावन्न पश्यति निकाममर्षणो मां भ्रूभङ्गभीषणकराळमुखः कृतान्तः । तावत्पतन्तु मयि ते भगवन्दयाळोरुन्निद्रपद्मकलिकामधुराः कटाक्षाः ॥ ३९ ॥ स त्वं स एव रभसो भवदौपवाह्यश्चक्रं तदेव शितधारमहं च पाल्यः । साधारणो त्वयि करीश समस्तजन्तोर्मातङ्गमानुषभिदा न विशेषहेतुः ॥ ४० ॥ निर्वापयिष्यति कदा करिशैलधामन् दुर्वारकर्मपरिपाकमहादवाग्निम् । प्राचीनदुःखमपि मे सुखयन्निव त्वत्पादारविन्दपरिचाररसप्रवाहः[1] ॥ ४१ ॥ मुक्तः[2] स्वयं सुकृतदुष्कृतशृङ्खलाभ्यामर्चिर्मुखैरधिकृतैरतिवाहिताध्वा । स्वच्छन्दकिं-

---

१. परिचारसुधाप्रवाहः  २. मुक्तस्त्वहं.

करतया भवतः करीश स्वाभाविकं प्रति लभेय महाधिकारम् ॥ ४२ ॥ त्वं चेत्प्रसीदसि तवास्मि[1] समीपतश्चेत्त्वय्यस्ति भक्तिरनघा करिशैलनाथ । संसृज्यते यदि च दासजनस्त्वदीयः संसार एष भगवन्नपवर्ग एव ॥ ४३ ॥ आहूयमानमनपायविभूतिकामैरालोकलुप्तजगदान्ध्यमनुस्मरेयम् । आलोहितांशुकमनाकुलहेतिजालं हैरण्यगर्भहयमेधहविर्भुजं त्वाम् ॥ ४४ ॥ भूयो भूयः पुलकनिचितैरङ्गकैरेधमानाः स्थूलस्थूलान्नयनमुकुलैर्बिभ्रतो बाष्पबिन्दून् । धन्याः केचिद्वरद भवतः संसदं भूषयन्तः स्वान्तैरन्तर्विनयनिभृतैः स्वादयन्ते पदं ते ॥ ४५ ॥ वरद तव विलोकयन्ति धन्या मरकतभूधरमातृ-

1. तवास्मि.

कायमाणाम् । व्यपगतपरिकर्मतारवाणां
मृगमदपङ्कविशेषनीलमङ्गम् ॥ ४६ ॥
अनिभृतपरिरम्भैरर्पितामिन्दिराया: क-
नकवलयमुद्रां कण्ठदेशे दधानः । फणि-
पतिशयनीयादुत्थितस्त्वं प्रभाते वरद
सततमन्तर्मानसं संनिधेया: ॥ ४७ ॥
तुरगविहगराजस्यन्दनान्दोलिकादिष्व-
धिकमधिकमन्यामात्मशोभां दधानम् ।
अनवधिकविभूतिं हस्तिशैलेश्वरं त्वामनु-
दिनमनिमेषैर्लोचनैर्निर्विशेयम् ॥ ४८ ॥
निरन्तरं निर्विशतस्त्वदीयमस्पृष्टचिन्ता-
पदमाभिरूप्यम् । सत्यं शपे वारणशैल-
नाथ वैकुण्ठवासेऽपि न मेऽभिलाषः
॥ ४९ ॥ व्यातन्वाना तरुणतुलसीदाम-
भिः स्वामभिख्यां मातङ्गाद्रौ मरकतरुचिं
पुष्णती मानसे नः । भोगैश्वर्यप्रियसह-

चरैः कापि लक्ष्मीकटाक्षैर्भूयः श्यामा भुवनजननी देवता संनिधत्ताम ॥ ५० ॥
इति विहितमुदारं वेङ्कटेशेन भक्त्या श्रुति सुभगमिदं यः स्तोत्रमङ्गीकरोति ।
करिशिखरिविटङ्कस्थायिनः कल्पवृक्षा-द्भवति फलमशेषं तस्य हस्तापचेयम् ॥ ५१ ॥

---

॥ वरदराजपञ्चाशत् संपूर्णा ॥

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥



---

श्रीमतेनिगमान्तमहागुरवेनमः ॥

# हरि दिन तिलकम्

नित्ये काम्ये च धर्मे नियमगुण विधि प्राप्त मार्गे निजाना माज्ञा नुज्ञा क्रमे तद्विहरण मुपधी कृत्य गोपायते यः॥ तस्मिन्कस्मिँश्चिदाद्ये हरिदिन तुलसी द्वादशीभिः प्रसाद्ये भद्राणामेकसेतौ भवतु भगवति श्रीसखे भावना नः ॥ १ ॥ त्रेधाधिक्यादिभेदाद्भवतितु नवधा तादृश द्वादशी नः शुद्धाविद्धेति चाष्टादशतनुरुदिता सद्भिरेकादशी सा । आद्यायां मुत्तरत्र व्रतविधिरुभयोस्स्या द्व्यवस्थाथषट्सु प्राच्यां द्वन्द्वे सतुर्ये परमिह नियतिस्सा-त्रिकेन्त्यत्रिके प्राक् ॥ २ ॥ द्वादश्युक्ता

सुधात्मा विषमिति दशमी द्विस्पृगेका-
कादशी सा ग्राह्याधिक्येसुधाया इति ज-
गदुरिमामाहु रेके सकामे ॥ वृद्धाद
द्यभावे त्वियमिति च कला द्वन्द्वमेकापि
वृद्धिः सन्दिग्धेतूत्तरस्यां व्रतमुपवसनं पा-
रणोक्ता परस्याम् ॥ ३ ॥ उक्ता नाड्यश्व-
तस्र स्त्वरुणा समुदय स्तत्र वेधे दशम्या
कर्त्तव्यो नोपवासः फलमिहहिवरं मोहि-
नी पर्यगृह्णात् ॥ वेधः पश्चात् यदास्यात्स-
वितुरुदयतस्तत्फलं दानवानाम् प्रोक्ता-
स्त्वमत्यवाया बहव इह तथा प्याहता
क्वापिविद्धा ॥ ४ ॥ पौराणिक्यातु रुक्मा-
ङ्गद चरितमुखैः प्राप्त गत्या पदव्या शुद्धा
सिद्धान्तयन्तः कतिचन कृतिनः सर्वथो-
ज्झन्ति विद्धाम् ॥ युक्तं तन्मास्मभूद्दा मु-
निभिरभिहिता द्वादशी च व्रताहाः । स्त्वे-

तै नापि मुख्यस्वदिवसाविधिनानन्यभ
क्तान्हरिस्ता ॥ ५ ॥ शुक्लाद्या तूपवा-
सस्तादितरविषये केवलास्यादभुक्तिः ।
कर्तव्येत्त्येवमाहुः कतिचनमहिषां सूत्रि-
णान्नित्यमात्रम् । एताद्विष्णु व्रतस्थेतरवि-
षयामिति प्रोच्चुरन्येस्फुटोक्तेः । दिष्पकृ-
च्चेत् द्वादशीस्यादनुपवसनतः काम्य-
कंत्विहोक्तम् ॥ ६ ॥ एकादश्यासुभुक्ति
स्मृतिरपिविविधैस्सन्नियम्येतवाक्यैः । वि-
द्धायास्त्याज्यतोक्तेः क्वचिदनुमतितःक्वा-
पिविद्धापवादात् । वैधीत्त्वेकादशीस्यादि-
तिजहदहल्लक्षणातोव्रतार्हा । चातुर्मास्या-
दिभेदे पुनरपिविधयो गौरवव्यञ्जनार्हाः
॥ ७ ॥ पत्न्यासिद्धेऽथवारप्रभृतिषुवचनैर्ये-
षुयेषूपवासः । तत्राप्येकादशी चेद्व्रत मि-
दमघनं प्रक्रमोक्तन्न शेषे ॥ अष्टाङ्गेज्या-

वतामप्युपवसनादिने लुप्तमन्त्यान्निषेधा
देवं प्राणाग्निहोत्रंप्रथममुपगतेऽप्येवम-
न्तेप्रयोज्यम् ॥८॥ सिद्ध्यन्त्येशन्तएवेत्य-
पि यदनुवदन्त्याहिताग्न्यादिवर्गे । तत्तु-
स्यादूग्रासस्संख्यानियतिविहतयेनव्रतत्या-
गहेतुः ॥ भुक्तेऽपिस्यान्नदोषः क्वचिदपिवि-
षयेबालवृद्धातुरादौ शक्यैश्चिन्ताजपाद्यैः
प्रभुरनघदयस्तैरपिप्रीणनीयः ॥ ९ ॥
सूतौशावेचकार्यौविधिबलनियतः स्नान-
पूर्वोपवासो ॥ नार्चादिस्तत्रनित्येशुचिभि-
रथपरैः कारयेत्काम्य रूपे । शावाद्यन्ते-
तुकुर्याच्छकनसमुचितं स्नानपूर्वंप्रदानम्
मध्येचेद्दर्शपूर्णाश्रुतिमुखविधिवत्कारयेद्वा-
यकुर्यात् ॥ १० ॥ अप्रक्रान्तेविधेय-
व्रतयजनमुखस्थानसर्वप्रकारे ॥ स्यात्प्र-
क्रान्तस्यनाशप्रभृतिहिभगवान्कर्मयो-

गेन्यषेधीत् । भंगेचास्यव्रतस्यत्रिदिनमु-
पवहेत् कारयेन्मुण्डनंवा मौण्ड्यञ्चैत-
च्छिखावर्जितमिदमखिलं निष्कृतिस्तत्र-
तुस्यात् ॥ ११ ॥ तन्त्रं तत्रोपवासा-
न्तर परिपतने काम्यतोवान्यतो वा ॥
तद्वत्प्राणाग्निहोत्रं प्रतिदिननियतं तंत्वि-
तं पारणादौ कालाल्पत्वेतदर्चाभवति
लघुतरानित्यकर्माणिचैवं । तत्तत्काले-
विदध्यात्स्वसमयनियतिंकारयेद्वायथार्ह-
म् ॥ १२ ॥ नानर्हैर्भाषणीयं समयति-
सुकृतंमन्त्रपूर्वैस्तथाच। प्राश्नीयात्पारणा-
दौमुनिदलतुलसीपत्रधात्रीफलानि शक्तौ
जागतुरात्रावपिहरिचरणध्यानसंकीर्तना-
द्यैः प्रारम्भे पारणेचस्मृतमिहमुनिभिर्म-
न्त्रपुष्पार्पणादि ॥ १३ ॥ काँस्यंमांस्सं-
ममूरञ्चणाकमधुपुरी कालशाकादिवर्गा-

न्  अन्यान्नंकोद्रवादीन्यतिधृतमपिचा-
त्यष्टिमुज्भेद्दशम्याम् ॥ ताम्बूलंदन्तकाष्ठं
निधुवनमसकृद्वारिपानादिजह्यात् । एका-
दश्यांदिवाचस्वपनमशकनाद्याश्रयाभीम-
नीतिः ॥ १४ ॥ द्वादश्यां द्वादशो-
ज्भेवदनमनृतंमैथुनंमांसतैलद्यूतव्या-
याम हिंसा स्वपनमपिदिवाकाँस्यभुक्ति-
क्रुधश्च ॥ निर्माल्योल्लंघनश्चव्रतहतिगम-
कंस्यान्निषेधेनिषेकं । कालाप्राप्तौप्रवृत्ते-
व्रतमिदमविदुर्नित्यकाम्यप्रकारम् ॥१५॥
किंश्चोक्तंमद्यपानान्निपततिनरकेतस्यपातै-
वशक्तस्त्वेकादश्यन्नकामः सहनिजपि-
तृभिः नारकेमज्जतीति ॥ वाराहश्वादि-
विट्प्राशनजनितमघं प्राहुरत्रान्नभोक्तुः ।
भुक्तिस्तत्राश्नतश्चस्मृतमिहहिमहापाप्म-
नामास्पदंतत् ॥ १६ ॥ आतिष्ठताभियु-

क्तिस्तिथितिषु विधिवलाच्छ्रौद्धमन्यन्निषिद्धं । प्राक्सामान्यापवादहेतुगतिर्नियतिः स-न्तति स्थापनार्था ॥ एकैकात्यंतलभ्यात्वि-हतुन्नृषुचतुर्भुक्तिवर्जं त्विहोक्तम् । श्रेयस्सिद्धचै स्वतःश्रीहरिदिनतिलकं शेषभूभृत्प्रसादा-त् ॥ इति श्रीकवितार्किकसिंहस्य सर्वत-न्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ता-चार्यस्य कृतिषु हरिदिनतिलकम् संपूर्णम्



# वेगासेतुस्तोत्रम् ॥



श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदाहृदि ॥



एकं वेगवतीमध्ये हस्तिशैले च दृ-श्यते । उपायफलभावेन स्वयं व्यक्तं परं

महः ॥ १ ॥ ईष्टे गमयितुं पारमेष सेतुरभङ्गुरः । यत्र सारस्वतं स्रोतो विश्राम्यति विशृङ्खलम् ॥ २ ॥ जयति जगदेकसेतुर्वेगवतीमध्यलक्षितो देवः । प्रशमयति यः प्रजानां प्रथितान्संसारजलधिकल्लोलान् ॥ ३ ॥ विभातु मे चेतसि विष्णुसेतुर्वेगापगावेगविघातहेतुः । अम्भोजयोनेर्यदुपज्ञमासीदभङ्गुरत्ता हयमेधदीक्षा ॥ ४ ॥ चतुराननसप्ततन्तुगोप्ता [1]सरितं वेगवतीमसौ निरुन्धन् । परिपुष्यति मङ्गळानि पुंसां [2]भगवद्भक्तिमतां यथोक्तकारी ॥ ॥ ५ ॥ श्रीमान्पितामहवधूपरिचर्यमाणः शेते भुजङ्गशयने स महाभुजङ्गः । प्रत्यादिशन्ति भवसंचरणं प्रजानां भक्तानुगन्तुरिह यस्य गतागता-

---

१. समयेतत्परिपन्थिनोनिरुन्धन् २. भगवानभक्तिमतां

नि ॥ ६ ॥ प्रशमितहयमेधव्यापदं पद्म-
योनेः श्रितजनपरतन्त्रं शेषभोगे शयान-
म् । शरणमुपगताः स्मः शान्तनिःशेष-
दोषं शतमखमणिसेतुं शाश्वतं वेगवत्याः
॥ ७ ॥ शरणमुपगतानां सोऽयमादेशका-
री शमयति परितापं [1]संमुखः सर्वज-
न्तोः । शतगुणपरिणामः संनिधौ यस्य
नित्यं वरवितरणभूमा वारणाद्रीश्वरस्य
॥ ८ ॥ काञ्चीभाग्यं कमलनिलयाचेत-
सोऽभीष्टसिद्धिः कल्याणानां निधिरवि-
कलः कोऽपि कारुण्यराशिः । पुण्यानां
नः परिणतिरसौ भूषयन्भोगिशय्या[2] वे-
गासेतुर्जयति विपुलो विश्वरक्षैकहेतुः ॥९॥
वेगासेतोरिदं स्तोत्रं वेङ्कटेशेन निर्मितम् ।

---

१. संमतः २. भोगशय्यां

ये पठन्ति जनास्तेषां यथोक्तं कुरुते हरिः ॥ १० ॥

॥ वेगासेतुस्तोत्रं संपूर्णम् ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥



# अष्टभुजाष्टकम् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

गजेन्द्ररक्षात्वरितं भवन्तं ग्राहैरिवाहं विषयैर्विकृष्टः । अपारविज्ञानदयानुभावमाप्तं सतामष्टभुजं प्रपद्ये ॥ १ ॥ त्वदेकशेषोऽहमनात्मतन्त्रस्त्वत्पादलिप्सा दिशता त्वयैव । असत्समोऽप्यष्टभुजास्पदेश सत्तामिदानीमुपलम्भितोऽस्मि ॥ २ ॥ स्वरूपरूपास्त्रविभूषणाद्यैः परत्वचिन्तां त्वयि दुर्निवाराम् । भोगे मृदूपक्रमतामभीप्सञ्छीलादिभिर्वारयसीव पुंसाम् ॥३॥ शक्तिं शरण्यान्तरशब्दभाजां सारं च संतोल्य फलान्तराणाम् । त्वद्दास्यहेतोस्त्वयि निर्विशङ्कं न्यस्तात्मनां नाथ बिभर्षि भारम् ॥ ४ ॥ अभीतिहेतोरनुवर्तनीयं नाथ त्वदन्यं न विभावयामि । भयं कुतः स्यात्त्वयि सानुकम्पे रक्षा कुतः स्यात्त्वयि जातरोषे ॥ ५ ॥ त्वदेकतन्त्रं-

कमलासहाय स्वेनैव मां रक्षितुमर्हसि त्वम् । त्वयि प्रवृत्ते मम किं प्रयासैस्त्वय्यप्रवृत्ते मम किं प्रयासैः ॥ ६ ॥ समाधिभङ्गेष्वपि संपतत्सु शरण्यभूते त्वयि बद्धकृत्ये । अपत्रपे सोढुमकिंचनोऽहं दूराधिरोहं पतनं च नाथ ॥ ७ ॥ प्राप्ताभिलाषं त्वदनुग्रहान्मां पद्मानिषेव्ये तव पादपद्मे । आ देहपातादपराधदूरमात्मान्तकैङ्कर्यरसं विधेयाः ॥ ८ ॥ प्रपन्नजनपाथेयं प्रपित्सूनां रसायनम् । श्रेयसे जगतामेतच्छ्रीमदष्टभुजाष्टकम् ॥ ९ ॥ शरणागतसंत्राणत्वराद्विगुणबाहुना । हरिणा वेङ्कटेशीया स्तुतिः स्वीक्रियतामियम् ॥ १० ॥

---

॥ अष्टभुजाष्टकं संपूर्णम् ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥



# कामासिकाष्टकम्

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

श्रुतीनामुत्तरं भागं वेगवत्याश्च दक्षिणाम् । कामादधिवसञ्जीयात्कश्चिदद्भुतकेसरी ॥ १ ॥ तपनेन्द्वग्निनयनस्तापानपचिनोतु नः । तापनीयरहस्यानां सारः कामासिकाहरिः ॥ २ ॥ आकण्ठमादिपु-

रूषं कण्ठीरवमुपरि कुण्ठतारातिम् ।
वेगोपकण्ठसङ्गाद्विमुक्तवैकुण्ठबहुमतिमु-
पासे ॥ ३ ॥ बन्धुमखिलस्य जन्तोर्बन्धु-
रपर्यङ्कबन्धरमणीयम् । विषमविलोचन-
मीडे वेगवतीपुलिनकेळिनरसिंहम् ॥४॥
स्वस्थानेषु मरुद्गणान्नियमयन्स्वाधीनसर्वे-
न्द्रियः पर्यङ्कस्थिरधारणाप्रकटितप्रत्यङ्-
मुखावास्थितिः ॥ प्रायेण प्रणिपेदुषः[१] प्र-
भुरसौ योगं निजं शिक्षयन् कामानात-
नुतादशेषजगतां कामासिकाकेसरी ॥५॥
विकस्वरनखस्वरुक्षतहिरण्यवक्षःस्थ-
लीनिर्गळद्विनिर्गळद्रुधिरसिन्धुसंध्यायि-
ताः । अवन्तु मदनासिकामनुजपञ्चव-
क्रस्य मामहंप्रथमिकामिथःप्रकटिताहवा
बाहवः ॥ ६ ॥ सटापटलभीषणे सरभ-

१. प्रणिपेतुषः

साट्टहासोद्भटे स्फुरत्क्रुधि परिस्फुट भ्रुकुटि-
केऽपि वक्त्रे कृते। कृपा कपटकेसरिन्द-
नुजडिम्भदत्तस्तना सरोजसदृशा दृशा
व्यतिविषज्य[1] ते व्यज्जते ॥ ७ ॥ त्वयि
रक्षति रक्षकैः किमन्यैस्त्वयि चारक्षति
रक्षकैः किमन्यैः । इति निश्चितधीः
श्रयामि नित्यं नृहरे वेगवतीतटाश्रयं
त्वाम् ॥ ८ ॥ इत्थं स्तुतः सकृदिहाष्टभि-
रेष पद्यैः श्रीवेङ्कटेशरचितैस्त्रिदशेन्द्रवन्द्यः।
दुर्दान्तघोरदुरितद्विरदेन्द्रभेदी कामासि-
कानरहरिर्वितनोतु कामान् ॥ ९ ॥

---

॥ कामासिकाष्टकं संपूर्णम् ॥

---

1. व्यतिभिपज्य

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥



# षोडशायुधस्तोत्रम् ॥



श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥



स्वसंकल्पकलाकल्पैरायुधैरायुधेश्वरः । जुष्टः षोडशभिर्दिव्यैर्जुषतां वः[1] परः पुमान् ॥ १ ॥ यदायत्तं जगच्चक्रं कालचक्रं च शाश्वतम् । पातु वस्तत्परं चक्रं चक्ररूप-

१. नः मुद्रितपुस्तकेषु सर्वत्र व इत्यस्य न इत्येव दृश्यते.

स्य चक्रिणः ॥ २ ॥ यत्प्रसूतिशतैरासन्द्रुमाः परशुलाञ्छिताः[१]। स दिव्यो हेतिराजस्य परशुः परिपातु वः ॥ ३ ॥ हेलया हेतिराजेन यस्मिन्दैत्याः समुद्धृते। शकुन्ता इव धावन्ति स कुन्तः पालयेत वः ॥ ४ ॥ दैत्यदानवमुख्यानां दण्ड्यानां येन दण्डनम् । हेतिदण्डेशदण्डोऽसौ[२] भवता दण्डयेद्द्विषः ॥ ५ ॥[३] अनन्यान्वयभक्तानां रुन्धन्नाशामतङ्गजान् । अनङ्कुशविहारो वः पातु हेतीश्वराङ्कुशः ॥ ६ ॥ संभूय शलभायन्ते यत्र पापानि देहिनाम् । स पातु [४]शतवक्त्राग्निर्हेतिर्हेतीश्वरस्य वः॥७॥ अविद्यां स्वप्रकाशेन [५]विद्यारूपश्छिनत्ति

१. लाञ्छनाः २. दण्डो मावस्माकं दण्ड. ३. अनन्यत्वाय
४. वक्त्राग्निर्है
५. विद्यायोगाच्छिनत्ति

यः । सः सुदर्शननिस्त्रिंशः सौतु वस्तत्त्व-
दर्शनम् ॥ ८ ॥ क्रियाशक्तिगुणो विष्णो-
र्यो[1] भवत्यतिशक्तिमान् । [2]अकुण्ठशक्तिः
सा शक्तिरशक्तिं वारयेत वः ॥ ६ ॥ तार-
त्वं यस्य संस्थाने शब्दे च परिदृश्यते ।
प्रभोः प्रहरणेन्द्रस्य पाञ्चजन्यः स पातु
वः ॥ १० ॥ [3]यं सात्त्विकमहंकारमामन-
न्त्यक्षसायकम् । अव्याद्दश्चक्ररूपस्य त-
द्धनुः शार्ङ्गधन्वनः ॥ ११ ॥ आयुधेन्द्रेण
येनैव विश्वसर्गो विविच्यते[4] । स वः सौ-
दर्शनं कुर्यात्पाशः पाशविमोचनम् ॥१२॥
विहारो येन देवस्य विश्वक्षेत्रकृषीवलः ।
व्यज्यते तेन सीरेण नासीरविजयोऽस्तु
वः ॥ १३ ॥ आयुधानामहं वज्रमित्यगी-

१. विष्णर्यो २. अचिन्त्यशक्तिः ३. यत्सात्त्विक
४. विमुच्यते

यत यः स वः । अव्याद्धेतीशवज्रोऽसाव-
दधीच्यस्थिसंभवः[१] ॥ १४ ॥ विश्वसंहृति-
शक्तिर्या विश्रुता बुद्धिरूपिणी । सा वः
सौदर्शनी भूयाद्गदप्रशमनी गदा ॥ १५ ॥
यात्यतिक्षोदशालित्वं मुसलो येन तेन
वः । हेतीशमुसलेनाशु भिद्यतां मोहमौ-
सलम् ॥ १६ ॥ शूलिहृष्टमनोर्वाच्यो येन
शूलयति द्विषः । भवतां तेन भवतात्त्रि-
शूलेन विशूलता ॥ १७ ॥ अस्त्रग्रामस्य
कृत्स्नस्य प्रसूतिं यं प्रचक्षते । सोऽव्यात्सु-
दर्शनो विश्वमायुधः षोडशायुधः ॥ १८ ॥
श्रीमद्वेङ्कटनाथेन श्रेयसे भूयसे सताम् ।
कृतेयमायुधेन्द्रस्य षोडशायुधसंस्तुतिः ॥१९॥

षोडशायुधस्तुतिः संपूर्णा ॥

---

१ वज्रोऽयं दधीच्यस्थिसमुद्भव.

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥



# गरुडदण्डकः ॥



नमः पन्नगनद्धाय वैकुण्ठवशवर्तिने ।
श्रुतिसिन्धुसुधोत्पादमन्दराय गरुत्मते ॥



गरुडमखिलवेदनीडाधिरूढं द्विषत्पीडनोत्कण्ठिताकुण्ठवैकुण्ठपीठीकृतस्कन्धमीडे स्वनीडागतिप्रीतरुद्रासुकीर्तिस्तनाभोगगाढोपगूढस्फुरत्कण्टकव्रातवेधव्यथावेपमानद्विजिह्वाधिपाकल्पविष्फार्यमाणास्फटावाटिकारत्नरोचिश्छटा-

* त्वकण्ठिताूरूढवैकुण्ठः

राजिनीराजितं कान्तिकल्लोलिनीराजितम् ॥

जय गरुड सुपर्ण देवीकराहार देवाधिपाहारहारिन् दिवौकस्पतिक्षिप्तदम्भोळिधाराकिणाकल्प [१]कल्पान्तवातूलकल्पोदयानल्पवीरायितोद्यच्चमत्कारदैत्यारिजैत्रध्वजारोहनिर्धारितोत्कर्ष संकर्षणात्मन् गुरुत्मन् मरुत्पञ्चकाधीश सत्यादिमूर्ते न कश्चित्समस्ते नमस्ते पुनस्ते नमः ॥

नम इदमजहत्सपर्याय पर्यायनिर्यातपक्षानिलास्फालनोद्वेलपाथोधिवीचीचपेटाहतागाधपाताळभांकारसंक्रुद्धनागेन्द्रपीडासृणीभावभास्वन्नखश्रेणये चण्डतुण्डाय नृत्यद्भुजङ्गभ्रुवे वज्रिणे दंष्ट्रया तु-

[१]. वीरायितोद्यच्चमत्कारि.

भ्यमध्यात्मविद्या विधेया विधेया भव-
द्दास्यमापादयेथा दयेथाश्च मे ॥

मनुरनुगतपक्तिवक्त्रस्फुरत्तारकस्ता-
वकश्चित्रभानुप्रियाशेखरस्त्रायतां नस्त्रि-
वर्गापवर्गप्रसूतिः परव्योमधामन् वलद्वे-
षिदर्पज्वलद्वालखिल्यप्रतिज्ञावतीर्ण स्थि-
रां तत्त्वबुद्धिं परां भक्तिधेनुं जगन्मूलक-
न्दे मुकुन्दे महानन्ददोग्ध्रीं दधीथा मुधा-
कामहीनामहीनामहीनान्तक ॥

षट्त्रिंशद्गणचरणो नरपरिपाटीन-
वीनगुम्भगुणः । विष्णुरथदण्डकोऽयं वि-
घटयतु विपक्षवाहिनीव्यूहम् ॥ विचित्र-
सिद्धिदः सोऽयं वेङ्कटेशविपश्चिता । गरु-
डध्वजतोषाय गीतो गरुडदण्डकः ॥

॥ गरुडदण्डकः संपूर्णः ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥

# गरुडपञ्चाशत् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

अङ्गन्यासानन्दमुख्यश्रुतिशिखरिमिळ-द्दण्डकं गारुडपूर्वं प्रागेवाभ्यस्य षट्सु प्रतिदिशमनघं [1]न्यस्य शुद्धास्त्रबन्धाः । प-ङ्क्तिन्यस्तपक्षद्वितयमुखपुटप्रस्फुटोदार-तारं मन्त्रं गारुत्मतं तं हुतवहदयिताशेखरं

1. न्यस्तशुद्ध

शीलयामः ॥ १ ॥ वेदः स्वार्थाधिरूढो बहिरबहिरभिव्यक्तिमभ्येति यस्यां सिद्धिः साकर्षणी सा परिणमति यया सापवर्गत्रिवर्गा । प्राणाम्य प्राणमन्यं प्रणिहितमनसो यत्र निर्धारयन्ति प्राचीं सा ब्रह्मविद्या परिचितगहना पातु गारुत्मती नः ॥ २ ॥ नेत्रं गायत्रमूचे त्रिवृदिति च शिरो नामधेयं यजूंषि च्छन्दास्यङ्गानि धिष्ण्यात्मभिरजनि शफैर्विग्रहो वामदेव्यम् । यस्य स्तोमात्मनोऽसौ बृहदितरगरुत्तादृशान्मायपुच्छः* स्वाच्छन्द्यं नः प्रसूतां श्रुतिशतशिखराभिष्टुतात्मा गरुत्मान् ॥ ३ ॥ यो यं धत्ते स्वनिष्ठं वहनमपि वरः स्पर्शितो येन यस्मै यस्माद्यस्याहवश्रीर्विदधति भजनं यत्र यत्रेति

---

* ताद्दशात्मायपुच्छः.

सन्तः । प्रायो देवः स इत्थं हरिगरुडभि-
दाकल्पितारोहवाहस्वाभाव्यः स्वात्म-
भव्यः प्रदिशतु शकुनिर्ब्रह्मसब्रह्मतां नः
॥ ४ ॥ एको विष्णोर्द्वितीयस्त्रिचतुरविदितं
पञ्चवर्णीरहस्यं षाड्गुण्यस्मेरसप्तस्वर-
गतिरणिमाद्यष्टसंपन्नवात्मा । देवो दर्वी-
करारिर्दशशतनयनारातिसाहस्रलक्षौ* वि-
क्रीडत्पक्षकोटिर्विघटयतु भयं वीतसं-
ख्योदयो नः ॥ ॥ ५ ॥ सत्याद्यैः सात्वता-
दिप्रथितमहिमभिः पञ्चभिर्व्यूहभेदैः पं-
चाभिख्यो निरुन्धन्भवगरळभवं प्राणानां
पंचभावम् । प्राणापानादिभेदात्प्रतितनु
मरुतो दैवतं पंचवृत्तेः पंचात्मा पंचधासौ
पुरुष उपनिषद्घोषितस्तोषयेन्नः ॥ ६ ॥
शिल्पद्घोगीन्द्रभोगे श्रुतिनिकरनिधौ मू-

---

* लक्षे विक्री.

र्तिभेदे स्वकीये वर्णाव्यक्तीर्विचित्राः परिकलयति यो वक्त्रबाहूरुपादैः । प्राणाः सर्वस्य जन्तोः प्रकटितपरमब्रह्मभावः स इत्थं क्लेशं छिन्दन्खगेशः सपदि विपदि नः सन्निधिः संनिधत्ताम् ॥ ७ ॥ अग्रे तिष्ठन्नुदग्रो मणिमुकुर इवानन्यदृष्टेर्मुरारेः पायान्मायाभुजङ्गीविषमविषभयाद्गाढमस्मान्गरुत्मान् । तुभ्यत्क्षीराब्धिपाथः सहभवगरळस्पर्शशङ्की स शङ्के छायां धत्ते यदीयां हृदि हरिहृदयारोहधन्यो मणीन्द्रः ॥ ८ ॥

---

इति गरुडपञ्चाशति परव्यूहवर्णकः प्रथमः ॥

---

आहर्तारं सुधाया दुरधिगममहाच-

क्रदुर्गस्थितायाः* जेतारं वज्रपाणेः सह
विबुधगणैराहवे बाहुवेगात् । विष्णौ
संप्रीयमाणो वरविनिमयतो विश्वविख्या-
तकीर्तिं देवं यासूत सासौ दिशतु भगवती
शर्म दाक्षायणी नः ॥ ९ ॥ वित्रासाद्वी-
तिहोत्रं प्रथममधिगतैरन्तिके मन्दधाम्ना
भूयस्तेनैव सार्धं भयभरतरळैर्वन्दितो देव-
वृन्दैः । कल्पान्तक्षोभदक्षं कथमपि कृपया
संक्षिपन्धाम चण्डं भित्वाण्डं निर्जिहानो
भवभयमिह नः खण्डयत्वण्डजेन्द्रः ॥ १० ॥
क्षुण्णक्षोणीधराणि क्षुभितचतुरकूपा-
रतिम्यद्रूगरुन्ति त्रुट्यत्तारासराणि स्थपु-
टितविबुधस्थानकानि क्षिपेयुः । पाताळ-
ब्रह्मसौधावधिविहितमुधावर्तनान्यस्मदा-
र्तिं ब्रह्माण्डस्यान्तराळे वृहत्ति खगपते-

---

* महापानदुर्गं ।

रर्भकक्रीडितानि ॥ ११ ॥ संविच्छस्त्रं दिशन्त्या सह विजयचमूराशिषः प्रेषयन्त्या संबध्नन्त्या तनुत्रं सुचरितमशनं पक्कणां निर्दिशन्त्या । एनोऽस्मद्वैनतेयो नुदतु विनतया कल्पिरक्षाविशेषः कद्रूसंकेतदास्यपक्षपणापणासुधालब्धभैक्षं जिघृक्षुः ॥ १२ ॥ विक्षेपैः पत्त्रतीनामनिभृतगतिभिर्वादितव्योमतूर्यो वाचालाम्भोधिवीचीवलय विरचितालोकशब्दानुबन्धः । दिक्कन्याकीर्यमाणक्षरदुडुनिकरव्याजलाजाभिषेको नाकोन्माथाय गच्छन्नरकमपि स मे नागहन्ता निहन्तु ॥ १३ ॥ क्षुत्ताक्षेपदक्षो मिहिरहिमकरोत्तालतालाभिघाती वेलावाःकेलिलोलो विविधघनघटाकन्दुकाघातशीलः । पायान्नः पातकेभ्यः पतगकुलपतेः

पक्षविक्षेपजातो वातः पातालहेलापटहपटुरवारम्भसंरम्भधीरः ॥ १४ ॥ किं निर्घातः किमर्कः परिपतति दिवः किं समिद्धोऽयमौर्वः किंस्वित्कार्तस्वराद्रिर्ननु विदितमिदं व्योमवत्मा गरुत्मान् । आसीदित्याजिहीर्षत्यभिपतति हरत्यत्ति हा तात हाम्बेत्यालापोद्युक्तभिल्लाकुलजठरपुटः पातु नः पत्रिनाथः ॥ १५ ॥ [1]आसृक्काक्तैरसृग्भिर्दुरुपरमतृषाशातनी शातदंष्ट्राकोटीलोटत्करोटीविकटकटकटारावघोरावतारा । भिन्द्यात्सार्धं पुलिन्द्या सपदि परिहृतब्रह्मगा[2] जिह्मगारेरुद्वेल्लद्विल्लवल्लीनिगरणाकरणा पारणा कारणा[3] नः ॥ १६ ॥ [4]स्वच्छन्दस्वर्गिवृन्दप्रथम-

---

१ आमृग्व्याप्तैरसृग्भिर्दुरुपशमतृषा २ मह्याका जिह्म
३ कारणं ४ स्वच्छन्द

तममहोत्पातनिर्घातघोरः *स्वान्तध्वान्तं निरुन्ध्याद्भुतधरणिपयोराशिराशीविषारेः। प्रत्युद्यद्भिल्लपल्लीभटरुधिरसरिल्लोलकल्लोलमाला[2]हालानिर्वेशहेलाहलहलबहुलो हर्षकोलाहलो नः ॥ १७ ॥ सान्द्रक्रोधानुबन्ध्यात्सरसि नखमुखे पादपे गण्डशैले तुण्डाग्रे कराठरन्ध्रे तदनु च जठरे निर्विशेषं युयुत्सू। अऽपादस्मानभऽयादविदितनखरश्रेणिदंष्ट्रानिवेशौ[3] जीवग्राहं गृहीत्वा कमठकरटिनौ भक्षयन्पक्षिमल्लः ॥ १८ ॥ अल्पः कल्पान्तलीलानटमुकुटसुधासूतिखण्डो बहूनां निःसारस्त्वब्जजाद्रेरनुभवतु मुधा मन्थनं त्वेष सिन्धुः। राकाचन्द्रस्तु राहोः स्वमिति कथयतः प्रेक्ष्य कद्रूकुमारान् सान्त-

---

* स्वान्तध्वान्तं. २. निर्वेशवेलाहल ३. दंष्ट्राभिघातौ.

र्हासं खगेन्द्रः सपदि हृतसुधस्त्रायतामा-
यतान्नः ॥ १६ ॥ आराదభ్యుత్థితైరావతమ-
मितजवोदञ्चदुच्चैःश्रवस्कं जातक्षोभं
विमथ्नन्दिशि दिशि दिविषद्वाहिनीशं क्ष-
णेन । भ्राम्यन्सव्यापसव्यं सुमहति
मिषति स्वर्गिसार्थे सुधार्थं प्रेङ्खन्नेत्रः
श्रियं नः प्रकटयतु चिरं पक्षवान्मन्थशै-
लः ॥ २० ॥ अस्थानेषु ग्रहाणामनिय-
तविहितानन्तवक्रातिचारा विश्वोपाधि-
व्यवस्थाविगमविलुलितप्रागवागादिभे-
दाः । छिन्नाः सुत्रामभक्तग्रहकलहविधाव-
ण्डजेन्द्रस्य चण्डाः पक्षोत्क्षेपा विपक्षक्ष-
पणसरभसाः शर्म मे निर्मिमीरन् ॥२१॥
तत्तत्प्रत्यर्थिसारावधिविहितमृपारोपगन्धो
रुपान्धैरेकः क्रीडन्ननेकैः सुरपतिसुभटैर-
क्षतो रक्षतान्नः । अन्योन्याबद्धलक्षापह-

रक्षाविहितामन्दमात्सर्यतुङ्गैरङ्गैरेव स्वकी-
यैरहमहमिकया मानितो वैनतेयः ॥२२॥
अस्तव्योमान्तमन्तर्हितनिखिलहरिन्मण्-
डलं चण्डभानोर्लुण्टाकैर्यैरकाण्डे जगद-
खिलमिदं-शर्वरी वर्वरीति । प्रेङ्खोळत्स्व-
र्गगोळस्खलदुडुनिकरस्कन्धबन्धान्निरु-
न्धन् रंहोभिस्तैर्मदंहो हरतु तरळितब्रह्म-
सद्मा गरुत्मान् ॥ २३ ॥ यः स्वाङ्के संग-
रान्तर्गरुदनिललवस्तम्भिते जम्भशत्रौ
कुण्ठास्त्रे सन्नकण्ठं प्रणायति पवये पत्त्र-
लेशं दिदेश । सोऽस्माकं संविधत्तां सुर-
पतिपृतनाद्वन्द्वयुद्धैकमल्लो माङ्गल्यं वाल-
खिल्यद्विजवरतपसां कोऽपि मूर्तो विवर्तः
॥२४॥ रुद्रान्विद्राव्य सेन्द्रान्हुतवरसहितं
गन्धवाहं गृहीत्वा कालं निष्काल्य धूत्वा
निर्ऋतिधनपती पाशिनं क्लेशयित्वा ।

सर्पाणां छाद्मिकानाममृतमयपणप्राप-णप्राप्तदक्षौ* निर्बाधं क्वापि सर्पन्नपहर-तु हरेरौपवाह्यो मदंहः ॥ २५ ॥

---

गरुडपञ्चाशति अमृतहरणवर्णको द्वितीयः

---

भुग्नभ्रूभ्रूकुटीभृद्भ्रमदमितगरुत्क्षो-भितक्ष्मान्तरिक्षः श्चक्राक्तो वक्रतुण्डः खरतरनखरः क्रूरदंष्ट्राकरालः। पायादस्मानपायाद्भयभरविगलद्दन्दशूकेन्द्रशूकः शौरेः संक्रन्दनादिप्रतिभटपृतनाक्रन्दनः स्यन्दनेन्द्रः ॥ २६ ॥ अर्यम्णा [२]धुर्ययोक्त्रग्रहणभयभृता सान्वितोऽनूरुबन्धात्कोदण्डज्यां[३]जिघृक्षेदिति चकितधिया शङ्कितः

---

* प्रापणप्राप्तिदक्षौ. २ धौर्वतप्रसन. ३ जिघत्सेदिति.

शंकरेण । तल्पे कल्पेत मा ते मतिरिति हरिणाप्याद्दरेणानुनीतः पक्षीन्द्रस्त्रायतां नः फणाधरमहिषीपत्रभङ्गापहारी ॥ २७ ॥ छायातार्क्ष्यानहीनां फणमणिमुकुरश्रेणिविस्पष्टबिम्बांस्त्राणापेक्षाधृतस्वप्रतिकृतिमनसा वीक्ष्य जातानुकम्पः । तेषां दृष्ट्वाथ चेष्टाः प्रतिगरुडगणाशङ्कया तुङ्गरोषः सर्पेन्द्रदर्पोद्धतो नः शमयतु दुरितं सर्पसन्तानहन्ता ॥ २८ ॥ उच्छ्वासाकृष्टतारागणघटितमृषामौक्तिकाकल्पशिल्पः पक्षव्याधूतपाथोनिधिकुहरगुहागर्भदत्तावकाशः । [1]दृष्टिं दंष्ट्राग्रदूतीं पृथुषु फणभृतां प्रेषयन्नुत्तमांगेष्वङ्गैरङ्गानि [2]रुन्धन्नवतु पिपतिषुः पत्रिणामग्रणीर्नः ॥ २९ ॥ आ वेधःसौधशृङ्गादनुपरतगतेरा भुजङ्गे-

१ दृष्टीर्दंष्ट्राग्रदूती. २ अङ्गैरङ्गं, अङ्गेनाङ्गं.

न्द्रलोकाच्छ्रेणीबन्धं वितन्वन्क्षणपरिणमितालातपातप्रकारः । पायान्नः पुण्यपापप्रचयमयपुनर्गर्भकुम्भीनिपातात्पातालस्यान्तराले बृहति खगपतेर्निर्विघातो निपातः ॥ ३० ॥ प्रत्यग्राकीर्णतत्तत्फणमणिनिकरं शङ्कुलाकोटिवक्रं तुण्डाग्रं संक्षुणुवानः कुलगिरिकठिने कर्परे कूर्मभर्तुः । पातालक्षेत्रपङ्कद्विरसनपृतनाशालिविच्छेदशाली शैलीं नः सप्तशैलीलघिमदरभसः सौतु साध्वीं सुपर्णः ॥३१॥ पर्यस्यत्पन्नगीनां युगपदसमयानर्भकान्गर्भकोशाद्ब्रह्मस्तम्बप्रकम्पव्यतिषजदखिलोदन्वदुन्निद्रघोषम् । चक्षुश्चक्षुःश्रुतीनां सपदि वधिरयत्पातु पक्षीश्वरस्य क्षिप्रक्षिप्तक्ष्माभृत्क्षणघटितनभःस्फोटमास्फोटितं नः ॥ ३२ ॥ तोयस्कन्धो न सिन्धोः

समघटत मिथः पक्षविक्षेपभिन्नः पाताळं न प्रविष्टं पृथुनि च विवरे रश्मिभिस्तिग्मरश्मेः। तावद्ग्रस्ताहिवक्त्रक्षरितविषमषीपङ्ककस्तूरिकाङ्कः प्रत्यायातः स्वयूथ्यैः स्थित इति विदितः पातु पक्षीश्वरो नः ॥ ३३ ॥ बद्धस्पर्धैरिव स्वैर्बहुभिरभिमुखैरेककण्ठं स्तुवाने तत्तद्विश्वोपकारप्रणयिसुरगणप्रार्थितप्राणरक्षे। पायान्नः प्रत्यहं ते कमपि विषधरं प्रेषयामीति भीते संधित्सौ सर्पराजे सकरुणमरुणानन्तरं धाम दिव्यम् ॥ ३४ ॥ क्वाप्यस्थ्ना शर्कराढ्यं क्वचन घनतरासृक्छटाशीधुदिग्धं* निर्मोकैः क्वापि कीर्णं विषयमपरतो मण्डितं रत्नखण्डैः। अध्यारूढैः स्ववारेष्वहमहमिकया वध्यवेषं दधानैः काले

* शीधुगन्ध.

खेलन्भुजङ्गैः कलयतु कुशलं काद्रवे-
यान्तको नः ॥ ३५ ॥



गरुडपञ्चाशति नागदमनवर्णकस्तृतीयः ॥



वामे वैकुण्ठशय्याफणिपतिकटको
वासुकिर्ब्रह्मसूत्रो रत्नेन्नस्तक्षकेण ग्रथित-
कटिनटश्चारुकार्कोटहारः । पद्मं कर्णेऽप-
सव्ये प्रथिमवति महापद्ममन्यत्र बिभ्र-
च्चूडायां शङ्खपालं गुळिकमपि भुजे
दक्षिणे पक्षिमल्लः ॥ ३६ ॥ वक्त्र्याभस्व-
स्तिकाग्रस्फुरदरुणशिखादीप्ररत्नप्रदीपै-[१]
र्धुन्वद्भिस्तापमन्तर्बहुळविषमपीगन्धतै-
लाभिपूर्णैः । नित्यं[२] नीराजनार्थैर्निजफ-

१. शिखादीप्ररत्न. २ नीराजनार्थे.

णफलकैर्घूर्णमानानि तूर्णं भोगैरापूरयेयुर्भुजगकुलरिपोर्भूषणानीषणां नः ॥ ३७ ॥ अङ्गप्रत्यङ्गलीनामृतरसविसरस्पर्शलोभादिवान्तस्त्रासाद्ध्रासानुबन्धादिव सहजमिथोवैरशङ्कोत्तरङ्गात् । रुद्धागाढोपगूढोच्छ्वसननिबिडितस्थानयोगादिवास्मद्भद्राय स्युर्भजन्तो भगवति गरुडे गाढतां गूढपादः ॥ ३८ ॥ कोटीरे रत्नकोटिप्रतिफलिततया नैकधा भिन्नमूर्तिर्वल्मीकस्थान्स्वयूथ्यानभित इव निजैर्वेष्टनैः क्लृप्तरक्षः । क्षेमं नः सौतु हेमाचलविधृतशरन्मेघलेखानुकारी रोचिश्चूडालचूडामणिरुरगरिपोरेष चूडाभुजङ्गः ॥ ३९ ॥ द्राघीयः कर्णपाशद्युतिपरिभवव्रीळयेव स्वभोगं संक्षिप्याऽनन्समीरं दरविनतमुखो निश्वसन्मन्दमन्दम् । आसीद-

द्गण्डभित्तिप्रतिफलनमिषात्क्वापि गूढं विविक्तुः क्षिप्रं दोषान्क्षिपेन्नः खगपतिकुहनाकुण्डलः कुण्डलीन्द्रः ॥ ४० ॥ वालाग्रग्रन्थिबन्धग्रथितपृथुशिरोरत्नसंदर्शनीयो [1]मुक्ताशुभ्रोदराभो हरिमणिशकलश्रेणिदृश्येतरांशः । क्ष्विवग्दम्भोलिधारावणकिणविषमोत्तम्भनस्तब्धवृत्तिर्व्यालाहारस्य हृद्यो हरतु स मदघं हारदर्वीकरेन्द्रः ॥ ४१ ॥ वैकक्ष्यस्रग्विशेषच्छुरणपरिणमच्छस्त्रबन्धानुबन्धो वक्षःपीठाधिरूढो भुजगदमयितुर्ब्रह्मसूत्रायमाणः । अश्रान्तस्वैरनिद्राविरचितविविधोच्छ्वासनिश्वासवेगप्रामोच्छूनाकृतिर्नः क्षपयतु दुरितं कोऽपि कद्रूकुमारः ॥४२॥ श्लिष्यद्रूद्रासुकीर्तिस्तनतटघुसृण-

---

1. मुक्ताशुभ्रप्रभरामो,

त्वेपसंक्रान्तसारस्फारामोदाभिलाषोन्न-
मितपृथुफणाचक्रवालाभिरामः । प्रायः
प्रेयःपटीरद्रुमविटपधिया श्लिष्टपक्षीन्द्रबाहु-
र्व्याहन्यादस्मदीयं वृजिनभरमसौ वृन्द-
शो दन्दशूकः ॥ ४३ ॥ ग्रस्तानन्तर्निवि-
ष्टान्फणिन इव शुचा गाढमाश्लिष्य दुः-
स्यन्[१] [२]क्षुणणानेकः स्वबन्धून्क्षुधमिव
कुपितः पीडयन्वेष्टनेन । व्यालस्ताद्दर्वी-
दरस्थो विपुलगलगुहावाहिफूत्कारवात्या-
पौनःपुन्येन हन्यात्पुनरुदरगुहागेहवास्त-
व्यतां नः ॥ ४४ ॥ गाढासक्तो गरुत्मत्क-
टितटनिकटे रक्तचण्डातकाङ्के फक्कत्का-
ञ्चीमहिम्ना फणिमणिमहसा लोहिता-
ङ्गो भुजङ्गः । सत्तासांसिद्धिकं नः सपदि
बहुविधं कर्मबन्धं निरुन्ध्याद्भिन्ध्याद्द्वा-

---

१, दुःखात्. २ क्षुण्णानेकस्वबन्धून् .

क्षीनसंध्याघनघटिततटित्कान्तिचातुर्यधुर्यः ॥ ४५ ॥

---

गरुडपञ्चाशति परिष्कारवर्गकश्चतुर्थः ॥



वेगोत्तामं वितानं व्यजनमनुगुणं वैजयन्ती जयन्ती मित्रं नित्याभ्यमित्रं युधि विजयरथो युग्ययोगानपेक्षः। दासो निष्पर्युदासो दनुतनयभिदो निःसहायः सहायो दोधूयेतास्मदीयं दुरितमधरिताऽरातिपक्षः स्वपक्षैः[1] ॥ ४६ ॥ उक्षा दक्षान्तकस्य स्खलति वलजितःकुञ्जरः खञ्जरीतिः क्रान्तो धातुः शकुन्तोऽनुग इति

---

१. पक्षैः स्वपक्षैः.

दयया सामिरुद्धस्यदोऽपि । ग्राहत्रस्तद्वि-
पेन्द्रक्षतिभयचकिताकुण्ठवैकुण्ठचिन्ता-
नासीरोदारमूर्त्तिर्नरकविहतये स्ताद्विहङ्गे-
श्वरो नः ॥ ४७ ॥ वेगोद्वेलः सुवेलः कि-
मिदमिति मिथो मन्त्रितो वानरेन्द्रैर्माया-
मानुष्यलीलामभिनयति हरौ लब्धसेवा-
विशेषः । वैदेहीकर्णपूरस्तबकसुरभिणा
यः समाश्लेषि दोष्णा तृष्णापारिप्लवानां
स भवतु गरुडो दुःखवारिप्लवो नः ॥४८॥
दुग्धोदन्वत्प्रभूतः स्वकमहिमपृथुर्विष्णु-
ना कृष्णनाम्ना पिञ्छाकल्पानुकल्पः
[1]समघटि सुहृदो यत्प्रदिष्टः किरीटः ।
चीरो वैरोचनास्त्रव्रणकिणगुणितोदग्र-
निर्घातघातःसंघातं सर्पघाती स हरतु

१. समघटत पाठो.

महतामस्मदत्याहितानाम् ॥ ४९ ॥ रुन्ध्या त्संवर्तसंध्याघनपटलकनत्पत्त्रविक्षेपहेला-वातूलास्फालतूलाञ्चलनिचयतुलाधेयदैते-यलोकः । आस्माकैः कर्मपाकैरभिगतम-हितानीकमप्रत्यनीकैर्दीव्यन्दिव्यापदानै-र्दनुजविजयिनो वैजयन्तीशकुन्तः ॥५०॥ यत्पक्षस्था त्रिवेदी त्रिगुणजलनिधिर्ल-ङ्घ्यते यद्गुणज्ञैर्वर्गस्त्रैवर्गिकाणां गति-मिह लभते नाथवद्यत्सनाथः । त्रैका-ल्योपस्थितात्स त्रियुगनिधिरघादायता-त्त्रायतां नस्त्रातानेकस्त्रिधाम्नास्त्रिदशरिपु-चमूमोहनो वाहनेन्द्रः ॥ ५१ ॥ सैका पञ्चाशतं यामतनुत विनतानन्दनं नन्द-यिष्यन् कृत्वा मौलौ तदाज्ञां कविकथ-कघटाकेसरी वेङ्कटेशः । तामेतां शीलय-न्तः शमितविषधरव्याधिदेवाधिपीडाः

काङ्क्षापौरस्त्यलाभाः कृतमितरफलै-
स्तार्क्ष्यकल्पा भवन्ति ॥ ५१ ॥

गरुडपञ्चाशति अद्भुतवर्णकः पञ्चमः ॥

गरुडपञ्चाशत्संपूर्णा ॥

कवितार्किकसिंहाय कल्याणगुणशालिने
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥



# परमार्थस्तुतिः ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी
वेदान्ताचार्यवर्यो मे संनिधत्तां सदाहृदि ॥

श्रीमद्गृध्रसरस्तीरपारिजातमुपास्महे । तत्र तुङ्गैरतुङ्गैश्च प्रणातैर्गृह्यते फलम् ॥१॥ गुरुभिस्त्वदनन्यसर्वभावैर्गुणसिन्धौ कृतसंप्लवस्त्वदीये । रणपुंगव वन्दिभावमिच्छन्नहमस्म्येकमनुग्रहास्पदं ते ॥२॥ भुवनाश्रयभूषणास्त्रवर्गं मनसि त्वन्मयतां ममातनोतु । वपुराहवपुंगव त्वदीयं महिषीणामनिमेषदर्शनीयम् ॥ ३ ॥ अभिरक्षितुमग्रतः स्थितं त्वां प्रणवे पार्थरथे च भावयन्तः । अहितप्रशमैरयत्नलभ्यैः कथयन्त्याहवपुंगवं गुणज्ञाः ॥४॥ कमला निरपायधर्मपत्नी करुणाद्याः स्वयमृत्विजो गुणास्ते । अवनं श्रयतामहीनमाद्यं स च धर्मस्त्वदनन्यसेवनीयः ॥ ५ ॥ कृपणाः सुधियः कृपासहायं शरणं त्वां रणपुंगव प्रपन्नाः । अपवर्गनयादनन्यभावा

वरिवस्यारसमेकमाद्रियन्ते ॥ ६ ॥ [1]अव-
धीर्य चतुर्विधं पुमर्थं भवदर्थे विनियुक्त-
जीवितः सन् । लभते भवतः फलानि
जन्तुर्निखिलान्यत्र निदर्शने जटायुः ॥७॥
शरणागतरक्षणाव्रती मां न विहातुं रणा-
पुंगवार्हसि त्वम् । विदितं भुवने विभी-
षणो वा यदि वा रावण इत्युदीरितं ते
॥ ८ ॥ भुजगेन्द्रगरुत्मदादिलभ्यैस्त्वदनु-
ज्ञानुभवप्रवाहभेदैः । स्वपदे रणपुंगव
स्वयं मां परिचर्याविभवैः परिष्क्रियेथाः
॥९॥ विमलाशयवेङ्कटेशजन्मा स्मरणीया
रणपुंगवप्रसादात् । अनसूयुभिरादरेण
भाव्या परमार्थस्तुतिरन्वहं प्रपन्नैः ॥१०॥

---

॥ परमार्थस्तुतिः संपूर्णा ॥

---

१. वषमीष.

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥



# शरणागतिदीपिका ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

पद्मापतेः स्तुतिपदेन विपच्यमानं पश्यन्त्विह प्रपदनप्रवणा महान्तः । मद्वाक्यसंवलितमप्यजहत्स्वभावं मान्यं यतीश्वरमहानससंप्रदायम् ॥ १ ॥ नित्यं श्रिया वसुधया च निषेव्यमाणां निर्व्याजनिर्भयदयाभरितं विभाति । वेदान्तवे-

द्यमिह वेगवतीसमीपे दीपप्रकाश इति
दैवतमद्वितीयम् ॥ २ ॥ दीपस्त्वमेव जग-
तां दयिता रुचिस्ते दीर्घं तमः प्रतिनिव-
र्त्यमिदं युवाभ्याम् । स्तव्यं स्तवप्रियम-
तः[1] शरणोक्तिवश्यं स्तोतुं भवन्तमभिल-
ष्यति[2] जन्तुरेषः ॥ ३ ॥ पद्माकरादुपग-
ता परिषस्वजे त्वां वेगासरिद्विहरणा क-
लशाब्धिकन्या । आहुस्तदाप्रभृति दीप-
समाविभासमाजानतो मरकतप्रतिमं वपु-
स्ते ॥ ४ ॥ स्वामिन्गभीरसुभगं श्रमहा-
रि पुंसां माधुर्यरम्यमनघं मणिभङ्गदृश्य-
म् । वेगान्तरे[3] वितनुते प्रतिबिम्बशोभा
लक्ष्मीसरः सरसिजाश्रयमङ्ककं ते ॥ ५ ॥
आविश्य धारयसि विश्वममुष्य यन्ता

---

१. स्तवप्रियतमं शरणोक्ति. २. मभिवाञ्छति. मिह वाञ्छति.

३. वेगान्तरेऽपि तनुते...

शेषी श्रियः पतिरशेषतनुर्निदानम् । इत्यादिलक्षणगणैः पुरुषोत्तमं त्वां जानाति यो जगति सर्वविदेष गीतः ॥ ६ ॥ विश्वं शुभाश्रयवदीश वपुस्त्वदीयं सर्वा गिरस्त्वयि पतन्ति ततोसि सर्वः । सर्वे च वेदविधयस्त्वदनुग्रहार्थाः सर्वाधिकस्त्वमिति तत्त्वविदस्तदाहुः ॥ ७ ॥ ज्ञानं बलं नियमनक्षमताथ वीर्यं शक्तिश्च तेज इतिते गुणषट्कमाद्यम् । सर्गातिशायिनि हिमोपवनेश यस्मिन्नन्तर्गतो जगदिव त्वयि सद्गुणौघः ॥ ८ ॥ दीपावभास दयया विधिपूर्वमेतद्विश्वं विधाय निगमानपि दत्तवन्तम् । शिष्यायिताः शरणायन्ति मुमुक्षवस्त्वामाद्यं गुरुं गुरुपरंपरयाधिगम्यम्[१] ॥९॥ सत्तास्थितिप्रयतनप्रमुखैरुपात्तं स्वा-

---

१. परंपरयाभिगम्यम.

र्थं सदैव भवता स्वयमेव विश्वम् । दीप-प्रकाश तदिह त्वदवाप्तये त्वामव्याजसिद्धमनपायमुपायमाहुः ॥ १० ॥ भोग्यं मुकुन्द गुणभेदमचेतनेषु भोक्तृत्वमात्मनि निवेश्य निजेच्छयैव । [1]पाञ्चालिकाशुकविभूषणभोगदायी सम्राडिवात्मसमया सह मोदसे त्वम् ॥ ११ ॥ त्वा मातरं च पितरं सहजं निवासं सन्तः समेत्य शरणं सुहृदं गतिं च । निःसीमनित्यनिरवद्यसुखप्रकाशं दीपप्रकाश सविभूतिगुणं विशन्ति ॥ १२ ॥ जन्तोरमुष्य जनने विधिशम्भुदृष्टौ रागादिनेव रजसा तमसा च योगः । द्वैपायनप्रभृतयस्त्वदवेक्षितानां सत्त्वं विमुक्तिनियतं भवतीत्युशन्ति

१ पाञ्चालिकांशुकविभीषणभोगदायी, पाञ्चालिका-विभूषण.

॥१३॥ कर्मस्वनादिविषमेषु समो दयालुः स्वेनैव [1]क्लृप्तमपदेशमवेक्षमाणः । स्वप्राप्तये तनुभृतां त्वरसे मुकुन्द स्वाभाविकं तव सुहृत्त्वमिदं गृणन्ति ॥ १४ ॥ निद्रायितान्निगमवर्त्मनि [2]चारुदर्शी [3]प्रस्थानशक्तिसहितान्प्रतिबोध्य जन्तून् । जीर्णास्तनंधयजडान्धमुखानिवास्मा[4]न्नेतुं मुकुन्द यतसे दयया सहत्वम्[5] ॥ १५ ॥ भक्तिः प्रपत्तिरथ वा भगवंस्तदुक्तिस्तन्निष्ठसंश्रय इतीव विकल्प्यमानम् । [6]यत्किंचिदेकमुपपादयता त्वयैव त्रातास्तरन्त्यवसरे भविनो भवाब्धिम् ॥ १६ ॥ नानाविधैरकपटैरजहत्स्वभावैरप्राकृतैर्निजविहारवशेन सिद्धैः । आत्मीयरक्षणवि-

---

१. क्लृमंमुपदेशमये. २. चोरदर्शी. ३. शक्तिरहितान. ४ नियान्यान. ५. सह न्यम्. ६. यं कंचिदेकमुप...

पक्षविनाशनार्थैः[1] संस्थापयस्यनघजन्म-
भिराद्यधर्मम् ॥ १७ ॥ निम्नोन्नतानि नि-
खिलानि पदानि गाढं मज्जन्ति ते महि-
मसागरशीकरेषु । नीरन्ध्रमाश्रयासि नी-
चजनांस्तथापि शीलेन हन्त शिशिरोप-
वनेश्वर त्वम् ॥ १८ ॥ काशीवृकान्धक-
शरासनबाणगङ्गासंभूतिनामकृतिसंवद-
नाद्युदन्तैः[2] । स्वोत्तयम्बरीषभयशापमु-
खैश्च शंभुं त्वान्निघ्नमाह्वितवतामिह कः
शरण्यः ॥ १९ ॥ क्वासौ विभुः क वय-
मित्युपसत्तिभीतान् जन्तून्क्षणात्त्वदनुवृ-
त्तिषु [3]योग्ययन्ती । संप्राप्तसद्गुरुतनोः
समये दयाळोरात्मावधिर्भवति संस्कृत-
धीः[4] क्षमा ते ॥ २० ॥ योग्यं यमैश्च

---

१. विनाशनार्हैः. २. संवननाद्युदन्तैः. ३. त्वदनुभूतिषु.
४. शिक्षितधीः

नियमैश्च विधाय चित्तं सन्तो जितासनतया स्ववशासुवर्गाः । प्रत्याहृतेन्द्रियगणाः स्थिरधारणास्त्वां ध्यात्वा समाधियुगळेन विलोकयन्ति ॥ २१ ॥ पद्माभिरामवदनेक्षणपाणिपादं दिव्यायुधाभरणमाल्यविलेपनं त्वाम् । योगेन नाथ शुभमाश्रयमात्मवन्तः सालम्बनेन परिचिन्त्य न यान्ति तृप्तिम् ॥ २२ ॥ मानातिलङ्घिसुखबोधमहाम्बुराशौ मग्नास्त्रिसीमरहिते भवतः स्वरूपे । तापत्रयेण विहतिं न भजन्ति सन्तः[१] संसारघर्मजनितेन समाधिमन्तः ॥ २३ ॥ धीसंस्कृतान्विदधतामिह कर्मभेदान् शुद्धं जिते मनसि चिन्तयतां स्वमेकम् । त्वत्कर्मसंक्तमनसामपि चापरेषां सूते फलान्यभि-

१. मूत:

मतानि भवान्प्रसन्नः ॥ २४ ॥ उद्बाहुभावमपहाय यथैव खर्वः प्रांशुं [1]फलार्थमभियाचति योगिचिन्त्य । एवं सुदुष्करमुपायगणं विहाय स्थाने निवेशयति तस्य विचक्षणास्त्वाम् ॥ २५ ॥ नित्यालसार्हमभयं निरपेक्षमन्यैर्विश्वाधिकारमखिलाभिमतप्रसूतिम् । शिक्षाविशेषसुभगं[2] व्यवसायसिद्धाः सत्कुर्वते त्वयि मुकुन्द षडङ्गयोगम् ॥ २६ ॥ त्वत्प्रातिकूल्यविमुखाः स्फुरदानुकूल्याः कृत्वा पुनः कृपणतां विगतातिशङ्काः । स्वामिन्भव स्वयमुपाय इतीरयन्तस्त्वय्यर्पयन्ति निजभारमपारशक्तौ ॥ २७ ॥ अर्थान्तरेषु विमुखानधिकारहानेः [3]श्रद्धाधनास्त्वदनु-

---

१. प्रांशुं फलं समभियाचति २. विशेषसुलभं. ३ भक्ताधिकास्त्वद

भूतिविलम्बभीतान् । दीपप्रकाश लभसे सुचिरात्कृतीव[1] न्यस्तात्मनस्तव पदे निभृतान्प्रपन्नान् ॥ २८ ॥ मन्त्रैरनुश्रवमुखेष्वधिगम्यमानैः स्वाधिक्रियासमुचितैर्यदि वान्यवाक्यैः । नाथ त्वदीयचरणौ शरणं गतानां नैवाश्रुतायुतकलाप्यपरैरवाप्या ॥ २९ ॥ दत्ताः प्रजा जनकवत्तव देशिकेन्द्रैः प्रत्यभिनन्द्य भवता परिणीयमानाः । मध्ये सतां महितभोगविशेषसिद्ध्यै माङ्गल्यसूत्रमिव बिभ्रति किंकरत्वम् ॥ ३० ॥ दिव्ये पदे [2]नियतकिंकरताधिराज्यं [3]दातुं त्वदीयदयया विहिताभिषेकाः । आदेहपातमनघाः परिचर्यया ते युञ्जानचिन्त्य युवराजपदं भजन्ति ॥ ३१ ॥ त्वां पाञ्चरात्रिकनयेन पृथग्विधेन

---

१. कृती स्थं  २. दयितकिंकर...  ३. प्राप्तुं त्वयैव दयया.

वैखानसेन च पथा नियताधिकाराः।
संज्ञाविशेषनियमेन समर्चयन्तः प्रीत्या
नयन्ति फलवन्ति दिनानि धन्याः ॥३२॥
[१]वर्णाश्रमादिनियतक्रमसूत्रबद्धा भक्त्या
यथार्हविनिवेशितपत्रपुष्पा। मालेव का-
लविहिता हृदयंगमा त्वामामोदयत्यनुप-
रागधियां सपर्या ॥ ३३ ॥ ब्रह्मा गिरीश
इतरेऽप्यमरा य एते निर्धूय तान्निरयतु
ल्यफलप्रसूतीन्। प्राप्तुं तवैव पदपद्मयुगं
प्रतीताः पातिव्रतीं त्वयि [२]वहन्ति पराव-
रज्ञाः ॥ ३४ ॥ नाथ त्वदिष्टविनियोगवि-
शेषसिद्धं शेषत्वसारमनपेक्ष्य[३] निजं गुणा-
ज्ञाः। भक्तेषु ते वरगुणार्णव पारतन्त्र्या-
द्दास्यं भजन्ति विपणिव्यवहारयोग्यम्
॥ ३५ ॥ सद्भिस्त्वदेकशरणैर्नियतं[४]सना-

१ वर्णाश्रमादिनियमस्थिरसूत्रबन्धा २ भजन्ति ३ सारमनुपेक्ष्य
४ नियताः

था: सर्पादिवत्त्वदपराधिषु दूरयाताः ।
धीरास्तृणीकृतविरिञ्चपुरंदराद्याः कालं
क्षिपन्ति भगवन्करणौरवन्ध्यैः ॥ ३६ ॥
वागादिकं मनसि तत्पवने स जीवे भूते-
ष्वयं पुनरसौ त्वयि तैः समेति । साधा-
रणोत्क्रमणकर्म समाश्रितानां यन्त्रा
मुकुन्द भवतैव यथा यमादेः ॥ ३७ ॥
सन्ध्यान्ययोरयनयोर्निशि वासरे वा सं॰
कल्पितायुरवधीन्सपदि प्रपन्नान् । हार्दः
स्वयं निजपदे विनिवेशयिष्यन्नाडीं प्रवे-
शयसि नाथ शताधिकां त्वम् ॥ ३८ ॥
अर्चिर्दिनं विशदपक्ष उदकप्रयाणं संव-
त्सरो मरुदशीतकरः शशाङ्कः । सौदाम-
नी जलपतिर्वलजित्प्रजेश इत्यातिवाहि-
कसखो नयसि स्वकीयान् ॥ ३९ ॥ त्व-

च्छेषवृत्त्यनुगुणैर्महितैर्गुणौघै[1]राविर्भवत्य-
युतसिद्धनिजस्वरूपे । त्वल्लक्षणेषु नियते-
ष्वपि भोगमात्रे साम्यं भजन्ति परमं
भवता विमुक्ताः ॥ ४० ॥ इत्थं त्वदेकश-
रणैरनघैरवाप्ये त्वत्किंकरत्वविभवे स्पृ-
हयापराध्यन् । आत्मा ममेति भगवन्भ-
वतैव गीता[2] वाचो निरीक्ष्य भरणाय
इह[3]त्वयाहम् ॥ ४१ ॥ पद्मामहीप्रभृति-
भिः परिभुक्तभूम्नः का हानिरत्र मयि
भोक्तरि ते भवित्री । दुष्येत्किमङ्घ्रितटि-
नी तव देवसेव्या दुर्वारतर्षचपलेन शुना-
वलीढा ॥ ४२ ॥ सत्त्वानि नाथ विविधा-
न्यभिसंजिघृक्षोः[4] संसारनाट्यरसिकस्य
तवास्तु तृप्त्यै । प्रत्यक्पराङ्मुखमतेरस-

---

१ सहितैर्गुणैघै... सहितैर्गुणैघै.... २ गीतान्प्रावो निरी-
क्ष्य. गीता.प्रोयो भिरीक्ष्य. ३. इति. ४. विधिनाप्यपि सं...

मीक्ष्यकर्तुः प्राचीनसज्जनविडम्बनभूमिका मे ॥ ४३ ॥ कर्तव्यमित्यनुकलं कलयाम्यकृत्यं स्वामिन्नकृत्यमिति कृत्यमपि त्यजामि । अन्यद्व्यतिक्रमणजातमनन्तमर्थे[1]स्थाने दया [2]भवतु ते मयि सार्वभौमी ॥ ४४ ॥ यं पूर्वमाश्रितजनेषु भवान्यथावद्धर्मं परं प्रणिजगौ स्वयमानृशंस्यम् । संस्मारितस्त्वमसि तस्य शरण्यभावान्नाथ त्वदात्तसमया ननु मादृशार्थम् ॥ ४५ ॥ त्राणं भवेति सकृदुक्तिसमुद्यतानां तैस्तैरसह्यवृजिनैरुदरंभरिस्ते । सत्यापिता शतमखात्मजशंकरादौ नाथ क्षमा न खलु जन्तुषु मद्विवर्जम् ॥ ४६ ॥ क्षमादिपुत्रिषु [3]कथां कथमप्यजानन्कामादिमेदुरतया[4] कलुषप्रवृत्तिः । साकेतसंभव-

---

१ मनन्तमर्थे- २ यद्वतु ३ कथं कथमित्यजानन्
४ कामादिमांसलतया

चराचरजन्तुनीत्या[1] वीक्ष्यः प्रभो विषय-वासितयाप्यहं ते ॥ ४७ ॥ ब्रह्माण्डलक्ष-शतकोटिगणाननन्तानेकक्षणे विपरिव-र्त्य विलज्जमानाम् । मत्पापराशिमथने मधुदर्पहन्त्रीं शक्तिं नियुङ्क्ष्व शरणाग-तवत्सल त्वम् ॥ ४८ ॥ आस्तां प्रपत्ति-रिह देशिकसाक्षिका[2] मे सिद्धा तदुक्तिर-नघा त्वदपेक्षितार्था । न्यस्तस्य पूर्वनि-पुणैस्त्वयि नन्विदानीं [3]पूर्णो मुकुन्द पुन-रुक्त उपाय एषः ॥ ४९ ॥ यद्वा मदर्थप-रिचिन्तनया तवाल[4] संज्ञां प्रपन्न इति साहसिको बिभर्मि । एवं स्थिते त्वदप-वादनिवृत्तये मां पात्रीकुरुष्व भगवन्भव-तः कृपायाः ॥ ५० ॥ त्यागे गुणेश श-रणागतसंज्ञिनो मे स्त्यानागसोऽपि सह-

---

१ जन्तुरीत्या २ साक्षिकं मे ३ पूर्णो
४ तवाहं चिन्तनया तु संज्ञां काऽहं प्रपन्न इति

सैव परिग्रहे वा । किं नाम कुत्र भवतीति कृपादिभिस्ते गूढं निरूपय गुणोत्तरतारतम्यम् ॥ ५१ ॥ स्वामी दयाजलनिधिर्मधुरः क्षमावान् शीलाधिकः श्रितवशः शुचिरत्युदारः । एतानि हातुमनघो न किलार्हसि त्वं [१]विख्यातिमन्ति विरुदानि मया सहैव ॥ ५२ ॥ वेलाधनंजयरथादिषु वाक्यैः स्वैराघोषितामखिलजन्तुशरण्यतां ते । ज्ञानन्दशाननशतादधिकागसोऽपि पश्यामि दत्तमभयं स्वकृते त्वया मे ॥ ५३ ॥ रक्ष्यस्त्वया तव भरोऽस्म्यहमित्यपूर्वान्वर्णानिमानहृदयानपि वाचयित्वा । मद्दोषनिर्जितगुणो महिषीसमक्षं मा भूस्त्वदन्य इव मोघपरिश्रमस्त्वम् ॥ ५४ ॥ मुख्यं च यत्प्रपदनं स्व-

१. विख्यातधीरविरुदानि

यमेव साध्यं दातव्यमीश कृपया तदपि त्वैयव। तन्मे भवच्चरणसङ्गवतीमवस्था पश्यन्नुपायफलयोरुचितं विधेयाः ॥५५॥ अल्पास्थिरैरसुकरैरसुखावसानैर्दुःखान्वितैरनुचितैरभिमानमूलैः। प्रत्यक्परागनुभवैः परिघूर्णितं मां त्वय्येव नाथ चरितार्थय निर्विविक्षुम्[1] ॥ ५६ ॥ तत्त्वावबोधशमितप्रतिकूलवृत्तिं कैंकर्यलब्धकरणत्रयसामरस्यम्। कृत्वा त्वदन्यविमुखं कृपया स्वयं मां स्फातिं दृशोः प्रतिलभस्व जगज्जनन्याः ॥ ५७ ॥ इत्थं स्तुतिप्रभृतयो यदि संमताः स्युर्यद्वापराधपदवीष्वभिसंविशन्ति[2]। स्तोकानुकूल्यकणिकावशवर्तिनस्ते प्रीतिक्षमाप्रसरयोरहमस्मि

---

१. निर्विपक्षम्, निर्व्यपेक्षम्, निर्विवक्षन. २. पद्वीष्वपि संविशन्ति.

लक्ष्यम् ॥ ५८ ॥ स्नेहोपपन्नविषयः स्वदशाविशेषाद्भूयस्तमिस्रशमनीं भुवि वेङ्कटेशः । दिव्यां स्तुतिं निरमिमीत सता नियोगाद्दीपप्रकाशशरणागतिदीपिकाख्याम् ॥ ५९ ॥*

---

॥ शरणागतिदीपिका संपूर्णा ॥

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥



---

* 'एतदनन्तरम्' 'एता दीपप्रकाशस्तुतिम्'-इति पद्यं केषुचन कोशेषु दृश्यते; तत्तु न श्रीमदाचार्यानुगृहीतमिति साम्प्रदायिकाः ।

# देवनायकपञ्चाशत् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

प्रणतसुरकिरीटप्रान्तमन्दारमाला-
विगळितमकरन्दस्निग्धपादारविन्दः । प-
शुपतिविधिपूज्यः पद्मपत्रायताक्षः फणि-
पतिपुरनाथः पातु मा देवनाथः ॥ १ ॥
देवाधिनाथकमलापृतनेशपूर्वां दीप्तान्तरां
वकुळभूषणनाथमुख्यैः । रामानुजप्रभृ-
तिभिः परिभूषिताग्रां गोप्त्रीं जगन्ति
गुरुपङ्क्तिमहं प्रपद्ये ॥ २ ॥ दिव्ये दयाज-
लनिधौ दिविषन्नियन्तुस्तीर्थं निदर्शितव-
तास्त्रिजगन्निषेव्यम् । प्राचः कवीन्निगम-

संमितसूक्तोक्तीन्प्राचेतसप्रभृतिकान्प्रणा-
माम्यभीक्ष्णम् ॥ ३ ॥ मातस्त्वमम्बुरुह-
वासिनि किंचिदेत[1]द्विज्ञाप्यते मयि कुरु-
ष्व तथा प्रसादम् । आकर्णयिष्यति
यथा विबुधेश्वरस्ते प्रेयानसौ पृथुकज-
ल्पितवन्मदुक्तिम् ॥ ४ ॥ निर्विश्यमान-
विभवं निगमोत्तमाङ्गैः स्तोतुं क्षमं मम च
देवपते भवन्तम् । गावः पिबन्तु गणशः[2]
कलशाम्बुराशिं किं तेन तर्णकगणास्तृ-
णमाददानाः[3] ॥ ५ ॥ अज्ञातसीमकम-
नन्तगरुत्मदाद्यैस्तं त्वां समाधिनियतैरपि
सामि दृष्टम् । तुष्टूषतो मम मनोरथसि-
द्धिदायी[4] दासेषु सत्य इति धारय नाम-
धेयम् ॥ ६ ॥ विश्राणयन्मम विशेषवि-
दामनिन्द्यामन्तर्वर्तीं गिरमहीन्द्रपुराधि-

१. द्विज्ञाप्यसे. २. तृषिताः. ३. गणाश्चिरमाददानाः, ४. दायि.

राज । स्तव्यः स्तवप्रिय इतीव तपोधनोक्तं स्तोतेति च त्वदभिधानमवन्ध्यय त्वम् ॥ ७ ॥ संरक्षणीयममराधिपते त्वयैव दूरं प्रयातमपि दुस्त्यजगाढबन्धम् । [1]आकृष्टवानसि भवाननुकम्पमानः सूत्रानुबद्धशकुनिक्रमतः स्वयं माम् ॥ ८ ॥ व्यामोहिता विविधभोगमरीचिकाभिर्विश्रान्तिमद्य लभते विबुधैकनाथ । [2]गम्भीरपूर्णमधुरं मम धीर्भवन्तं ग्रीष्मे तटाकमिव शीतमनुप्रविष्टा ॥ ९ ॥ दिव्ये पदे जलनिधौ निगमोत्तमाङ्गे स्वान्ते सतां सवितृमण्डलमध्यभागे । ब्रह्माचले च बहुमानपदे मुनीनां व्यक्तिं तव त्रिदशनाथ वदन्ति नित्याम् ॥ १० ॥ तीर्थैर्वृतं वृजिनदुर्गतिनाशनार्हैः शेषक्षमाविहगराः-

१ आकृष्टवानिति २ गम्भीरपुण्यमधुरं, गम्भीरपूर्णसुभगं

जविरञ्चजुष्टैः । नाथ त्वया नतजनस्य भवौषधेन प्रख्यातमौषधगिरिं प्रणमन्ति देवाः ॥ ११ ॥ स्वाधीनविश्वविभवं भगवन्विशेषात्त्वां देवनायकमुशन्ति परावरज्ञाः । प्रायः प्रदर्शयितुमेतदिति प्रतीमस्त्वद्भक्तिभूषितधियामिह देवभावम् ॥ १२ ॥ तत्त्वानि यानि चिदचित्प्रविभागवन्ति त्रय्यन्तवृद्धगणितानि सितासितानि । दीव्यन्ति तान्यहिपुरन्दरधामनाथ दिव्यास्त्रभूषणतया तव विग्रहेऽस्मिन् ॥ १३ ॥ भूषायुधैरधिगतं निजकान्तिहेतोर्भुक्तं प्रियाभिरनिमेषविलोचनाभिः । प्रत्यङ्गपूर्णमुपमासुभगं वपुस्ते दृष्ट्वा दृशौ विबुधनाथनतृप्यतां मे ॥ १४ ॥ वेदेषु निर्जरपते निखिलेष्वधीतं व्यासादिभिर्बहुमतं तव सूक्तमग्र्यम् । अङ्गान्यमूनि भवतः सुभ-

गान्यधीते विश्वं विभो जनितवन्ति वि-
रञ्चपूर्वम् ॥ १५ ॥ देवेश्वरत्वमिह दर्श-
यितुं क्षमस्ते नाथ त्वयापि शिरसा वि-
धृतः किरीटः। एकीकृतद्युमणिबिम्बसह-
स्रदीप्ति[1]र्निर्मूलयन्मनसि मे निविडं तमि-
स्रम् ॥ १६ ॥ मुग्धस्मितामृतशुभेन मुखे-
न्दुना ते संगम्य संसरणसंज्वरशान्तये
नः। संपद्यते विबुधनाथ समाधियोग्या
शर्वर्यसौ कुटिलकुन्तळकान्तिरूपा॥१७॥
बिम्बाधरं विकचपङ्कजलोचनं ते लम्बा-
ळकं [2]ललितकुण्डलदर्शनीयम्। कान्तं
मुखं कनककैतककर्णपूरं स्वान्तं विभू-
षयति देवपते मदीयम् ॥ १८ ॥ लब्धा-
तिथौ क्वचिदियं रजनीकरेण लक्ष्मीः
स्थिरा सुरपते भवतो ललाटे। यत्स्वेद-

१ सहस्रतुल्यो निर्मुलयेन्मम २ ललितकून्तळ

विन्दुकशिकोद्गतबुद्बुदान्तस्त्यक्तः पुरा स पुरुषोऽजनि शूलपाणिः ॥१६॥ लावण्यवर्षिणि ललाटतटे घनाभे विभ्रत्तटिद्गुणविशेषमिवोर्ध्वपुण्ड्रम् । विश्वस्य निर्जरपते तमसावृतस्य मन्ये विभावयसि माङ्गलिकप्रदीपम् ॥ २० ॥ आहुः श्रुतिं विबुधनायक तावकीनामाशागणप्रसवहेतुमधीतवेदाः । आकर्णिते तदियमार्तरवे प्रजानामाशाः प्रसाधयितुमादिशति स्वयं त्वाम् ॥ २१ ॥ कन्दर्पलाञ्छनतनुस्त्रिदशैकनाथ कान्तिप्रवाहरुचिरे तव कर्णपाशे । पुष्यत्यसौ प्रतिमुखस्थितदर्शनीया भूषामयी मकरिका विविधान्विहारान् ॥ २२ ॥ नेतुं सरोजवसतिर्निजमाधिराज्यं नित्यं निशामयति देवपते भुवौ ते । एवं न चेदखिलजन्तुविमोह-

नार्हा किं मातृका भवति कामशरासनस्य ॥ २३ ॥ आलक्ष्यसत्त्वमतिवेलदयोत्तरङ्गमभ्यर्थिनामभिमतप्रतिपादनार्हम् । स्निग्धायतं प्रथिमशालि सुपर्वनाथ दुग्धाम्बुधेरनुकरोति विलोचनं ते ॥ २४ ॥ विश्वाभिरक्षणविहारकृतक्षणैस्ते वैमानिकाधिप विडम्बितमुग्धपद्मैः । आमोदवाहिभिरनामयवाक्यगर्भैराद्रीभवाम्यमृतवर्षनिभैरपाङ्गैः ॥ २५ ॥ नित्योदितैर्निगमनिःश्वसितैस्तवैषा नासा नभश्चरपते नयनाब्धिसेतुः । आम्रेडितप्रियतमामुखपद्मगन्धैराश्वासिनी भवति संप्रति मुह्यतो मे ॥ २६ ॥ आरुण्यपल्लवितयोर्वनपारिजातमाभीरयोषिदनुभूतममर्त्यनाथ । वंशेन शङ्खपतिना च निषेवितं ते बिम्बाधरं स्पृशति रागवती मतिर्मे ॥२७॥

पद्मालयावलयदत्तसुजातरेखे त्वत्कान्ति-
मेचकितशङ्खनिभे मतिर्मे । विस्मेरभाव-
रुचिरा वनमालिकेव कण्ठे गुणीभवति
देवपते त्वदीये ॥ २८ ॥ आजानुलम्बि-
भिरलंकृतहेतिजालैर्ज्याघातराजिरुचिरै-
र्जितपारिजातैः । चित्राङ्गदैस्त्रिदशपुंगव
जातसङ्गा त्वद्बाहुभिर्मम दृढं परिरभ्यते
धीः ॥ २९ ॥ नीलाचलोदितनिशाकर-
भास्कराभे शान्ताहिते सुरपते तव शङ्ख-
चक्रे । पाणोरमुष्य भजतामभयप्रदस्य
प्रत्यायनं जगति भावयतः स्वभूम्ना ॥३०॥
अक्षोभणीयकरुणाम्बुधिविद्रुमाभि भक्ता-
नुरञ्जनममर्त्यपते त्वदीयम् । नित्यापरा-
धचकिते हृदये मदीये दत्ताभयं स्फुरति
दक्षिणपाणिपद्मम् ॥ ३१ ॥ दुर्दान्तदैत्य-
विशिखक्षतपत्रभङ्गं वीरस्य ते विबुधना-

यक बाहुमध्यम् । श्रीवत्सकौस्तुभरमाव-
नमालिकाङ्कं चिन्तानुभूय लभते चरिता-
र्थता नः ॥ ३२ ॥ वर्णाक्रमेण विबुधेश
विचित्रिताङ्गी स्मेरप्रसूनसुभगा वनमालि-
केयम् । हृद्या सुगन्धिरजहत्कमलामणी-
न्द्रा नित्या तव स्फुरति मूर्तिरिव द्विती-
या ॥ ३३ ॥ आर्द्रं तमोमथनमाश्रिततता-
रकं ते शुद्धं मनः सुमनसाममृतं दुहान-
म् । तत्तादृशं विबुधनाथ समृद्धकामं स-
र्गेष्विदं भवति चन्द्रमसा प्रसूतिः ॥३४॥
विश्वं निगीर्य विबुधेश्वर जातकार्श्यं म-
ध्यं वलित्रयविभाव्यजगद्विभागम् । आमो-
दिनाभिनलिनस्थविरिञ्चभृङ्गमाकल्पय-
त्युदरबन्ध इवाशयो मे ॥ ३५ ॥ नाकौ-
कसां प्रथमतामधिकुर्वते ते नाभीसरो-
जरजसां परिणामभेदाः । आराधय-

द्भिरिह तैर्भवतः समीची वीरोचिता-
विबुधनायक इत्यभिख्या ॥ ३६ ॥
पीताम्बरेण परिवारवती सुजाता दास्ये
निवेशयति देवपते दृशौ मे । विन्यस्त-
सव्यकरसङ्गमजायमानरोमाञ्चरम्यकिर-
णा रशना त्वदीया ॥ ३७ ॥ स्त्रीरत्नका-
रणमुपात्ततृतीयवर्णं दैत्येन्द्रवीरशयनं
दयितोपधानम् । देवेश यौवनगजेन्द्रक-
राभिराममूरीकरोतु भवदूरुयुगं मनो मे
॥ ३८ ॥ लावण्यपूरलळितोर्ध्वपरिभ्रमाभं
लक्ष्मीविहारमणिदर्पणबद्धसख्यम् । गो-
पाङ्गणेषु कृतचङ्क्रमणं तवैतज्जानुद्वयं
सुरपते न जहाति चित्तम् ॥ ३९ ॥ दूत्ये
दुकूलहरणे व्रजसुन्दरीणां दैत्यानुधाव-
नविधावपि लब्धसाह्यम् । कन्दर्पकाहळ-
निषङ्गकळाचिकाभं जङ्घायुगं जयति

देवपते त्वदीयम् ॥ ४० ॥ पाषाणनिर्मिततपोधनधर्मदारं भस्मन्युपाहितनरेन्द्रकुमारभावम् । संवाहितं त्रिदशनाथ रमामहीभ्या सामान्यदैवतमुशन्ति पदं त्वदीयम् ॥ ४१ ॥ आवर्जिताभिरनुषज्य निजांशुजालैर्देवेश दिव्यपद्मपद्मदळायताभिः । अन्याभिलाषपरिलोलमिदं मदीयमङ्गीकृतं हृदयमङ्गुळिभिः स्वयं ते ॥४२॥ पङ्कान्यसौ मम निहन्ति महस्तरङ्गैर्गङ्गाधिका विदधती गरुडस्रवन्तीम् । नाकौकसा मणिकिरीटगणैरुपास्या नाथ त्वदीयपदयोर्नखरत्नपङ्क्तिः ॥ ४३ ॥ वज्रध्वजाङ्कुशसुधाकलशातपत्रकल्पद्रुमाम्बुरुहतोरणशङ्खचक्रैः । मत्स्यादिभिश्च विबुधेश्वर मण्डितं ते मान्यं पदं भवतु मौळिविभूषणं नः ॥ ४४ ॥ चित्रं त्वदी-

यपदपद्मपरागयोगाद्योगं विनापि युगप-
द्विलयं प्रयान्ति । विष्वाञ्चि निर्जरपते
शिरसि प्रजानां वेधःस्वहस्तलिखितानि
दुरक्षराणि ॥ ४५ ॥ ये जन्मकोटिभिरु-
पार्जितशुद्धधर्मास्तेषां भवच्चरणभक्तिर-
तीव भोग्या[१] । त्वज्जीवितैस्त्रिदशनायक
दुर्लभैस्तैरात्मानमप्यकथयः स्वयमात्म-
वन्तम् ॥ ४६ ॥ निष्किंचनत्वधनिना वि-
बुधेश येन न्यस्तः स्वरक्षणभरस्तव पाद-
पद्मे । नानाविधप्रथितयोगविशेषधन्या ना-
र्हन्ति तस्य शतकोटितमांशकल्पाम् ॥ ४७
आत्मापहाररसिकेन मयैव दत्तमन्यैरधा-
र्यमधुना विबुधैकनाथ । स्वीकृत्य धारयि-
तुमर्हसि माँ त्वदीयं चोरोपनीतनिजनूपु-
रवत्स्वपादे ॥ ४८ ॥ अज्ञानवारिधिमपा-

---

१, योग्या ।

यधुरंधरं मामाज्ञाविभञ्जनमकिंचनसार्व-
भौमम् । विन्दन्भवान्विबुधनाथ समस्त-
वेदी किं नाम पात्रमपरं मनुते कृपायाः
॥ ४६ ॥ प्रह्लादगोकुलगजेन्द्रपरीक्षिदा-
द्यास्त्रातास्त्वया ननु विपत्तिषु तादृशीषु ।
सर्वं तदेकमपरं मम रक्षणं ते संतोल्य-
तां त्रिदशनायक किं गरीयः ॥ ५० ॥
वात्याशतैर्विषयरागतया विवृत्तैर्व्याघूर्ण-
मानमनसं विबुधाधिराज । [1]नित्योपतप्त
इति मां निजकर्मधर्मैर्निर्वेशय स्वपदपद्म-
मधुप्रवाहम् ॥ ५१ ॥ जय विबुधपते त्वं
दर्शिताभीष्टदानः सह सरसिजवासामेदि-
नीभ्यां वशाभ्याम् । नळवनमिव मृद्न-
न्पापराशिं नतानां गरुडसरिदनूपे गन्ध-
हस्तीव दीव्यन् ॥ ५२ ॥ निरवधिगुणा-

---

१. नित्योपतप्तमपि मां निज.

जातं नित्यनिर्दोषमाद्यं नरकमथनदत्तं
नाकिनामेकनाथम् । विनतविषयसत्यं
वेङ्कटेशः कविस्त्वा स्तुतिपदमधिगच्छ-
ञ्छोभते सत्यवादी ॥ ५३ ॥

॥ देवनायकपञ्चाशत् संपूर्णा ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥

# अच्युतसप्तकम् ॥

॥ अच्युतशतकम् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

णामह तिअसाण णाहं सच्चं दासाण अच्चुअं ठिरजोइम्। गलुलणइतडतमालं अहिन्दणअरोसहाअलेक्कगइन्दम् ॥ १ ॥ नमत त्रिदशाना नाथं सत्यं दासानामच्युतं स्थिरज्योतिः[1]। गरुडनदीतटतमालमहीन्द्रनगरौषधाच लैकगजेन्द्रम् ॥ १ ॥ किंकरसच्च थुई तुह सअंभुगेहिणिविलासवाहित्तमई। फणिआ वाळेण मए पञ्जरसुअजप्पिअं व कुणउ पसाअम् ॥ २ ॥ किङ्करसत्य स्तुतिस्तव स्वयंभूगेहिनीविलासव्याहृत-

---

सिरिवेङ्कणाहज्जो कहतक्किअसीहसव्वतन्तसतन्तो।
वेअन्तारिअवज्जो मह सण्णिज्झेउ सइ सअं हिअअम्मि ॥

श्रीवेङ्कटनाथार्य कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रः ॥
वेदान्ताचार्यवर्यो मम सन्निधत्तां सदा स्वयं हृदये ॥

१—अयं श्लोकः, प्राचीनेषु कोशेषु नास्ति.

१ स्थिरज्योतिषम. २. वाहित्तिमई—व्याहृतिमर्या

मयी । फणिता बालेन मया पञ्जरशु-
कजल्पितामिव करोतु प्रसादम् ॥ २ ॥
[1]मालिणं वि भासिअं मह किंकरसच्च
तुह कित्तिजोण्हापसरे । लग्गं लहउ
विसुद्धिं रच्छासलिलं व तिवहआसोत्त-
गअम् ॥ ३ ॥ मलिनमपि भाषितं मम
किङ्करसत्य तव कीर्तिज्योत्स्नाप्रसरे ।
लग्नं लभतां विशुद्धिं रथ्यासलिलमिव
त्रिपथगास्रोतोगतम् ॥ ३ ॥ तत्थारिणा-
एण ठविआ सोहउ तिअसाण णाह
तुज्झ समाए । वन्दित्तणमहिआणं म-
ज्झम्मि सुईण बालिसा मज्झ थुई-
॥४॥ तत्रारिनयेन स्थापिता शोभतां त्रि-
दशानां नाथ तव समाजे । वन्दित्वमहि-
तानां मध्ये श्रुतीनां बालिशा मम स्तुतिः

1. मइलं—मलिनं

॥ ४ ॥ अम्हगुरूणां अच्चुअ जीहासी-
हासणम्मि लद्धपइट्ठो। पडिवाइअपरमट्ठो
वारेसि अपण्डिअत्तणं अम्हाणम् ॥५॥
अस्मद्गुरूणामच्युत जिह्वासिंहासने
लब्धप्रतिष्ठः। प्रतिपादितपरमार्थो वार-
यस्यपण्डितत्वमस्माकम् ॥ ५ ॥ हिअए-
सु देसिआणं जण्हइलहरीसु पुण्णचन्दो
व्व फुडो। कलुसजलेसु व हंसो कसा-
अकबुरेसु ठासि अच्चुअ ण खणम्
॥ ६ ॥ हृदयेषु देशिकानां जाह्नवीलह-
रीषु पूर्णचन्द्र इव स्फुटः। कलुषजले-
ष्विव हंसः कषायकर्बुरेषु तिष्ठस्यच्युत
न क्षणम् ॥ ६ ॥ आअममेत्तपमाणो
आणोविअणं पआसणिअमाहप्पो।
सद्दहिअहिअअसुळहो दूरं मुअसि णअ-
सच्च डोलाअन्ते ॥ ७ ॥ आगममात्रप-

माणा आगोपीजनं प्रकाशनिजमाहात्म्यः।
[1]अव्हितहृदयसुलभो दूरं मुश्वसि नतस-
त्य दोलायमानान् ॥ ७ ॥ [2]सइ खवि-
असअळेहेअ सरणागअसत्त सत्तणा-
णाणन्दम् । उक्ळङ्घिअतिविहन्तं उ-
वणिसआणं सआइ गाअन्ति तुमम्
॥ ८ ॥ सदार्पितसकलहेयं शरणागत-
सत्य सत्यज्ञानानन्दम् । उल्लङ्घितत्रि-
विधान्तमुपनिषदां शतानि गायन्ति त्वाम्
॥ ८ ॥ कुणसि ण कीरसि केण वि
ठावेसि ण संठविज्जासि अणणणठिओ।
हरसि णिहिळं ण हीरासि आहिन्दणअ-
रिन्द अणहजोइफुरन्तो ॥ ९ ॥ करोषि
न क्रियसे केनापि स्थापयसि न
संस्थाप्यसेऽनन्यास्थितः । हरसि निखिलं

---

1. अच्युतहृदय. 2. संगयिअ—संअपित.

न ह्रियसे अहीन्द्रनगेरेन्द्रानघज्येतिस्स्फुरन् ॥ ९ ॥ अणुपमिअस्स वि अच्चुअ सत्ती तुह सअलधारणाइवहुत्ता[१] । तेण पडिवत्थुपुराणो सुव्वसि अपडिहअणिअठिई सव्वगओ ॥ १० ॥ अणुपमितस्याप्यच्युत शक्तिस्तव सकलधारणादिप्रभूता। तेन प्रतिवस्तुपूर्णः श्रूयसेऽप्रतिहतनिजास्थितिःसर्वगतः ॥ १० ॥ सअलाण धरणाणिअमणसामित्तणणिअमसंठिओ सव्वतणू । सुव्वसि अच्चुअ सव्वो [२]सइ दंसिअकज्जकारणत्तणकबुरो ॥११॥ सकलानां धरणानियमनस्वामित्वनियमसंस्थितः सर्वतनुः । श्रूयसेऽच्युत सर्वः सदा दर्शितकार्यकारणत्वकर्बुरः ॥११॥ पुरिसपहाणसरीरो भुवणाणं होसि अ-

---

१ पाहुद—प्रभूता; पउत्ता. २. सयदंसिअ—स्वयदर्शित.

च्चुअ उवात्राणम् । णिअसंकप्पसणा-
हो वहसि णिमित्तत्तणं वि अब्भुअस-
त्ती ॥ १२ ॥ पुरुषप्रधानशरीरो भुवनाना
मवस्यच्युतोपादानम् । निजसंकल्पसना-
थो वहसि निमित्तत्वमप्यद्भुतशक्तिः॥१२॥
विसमगुणङ्कुरपअरे जळं व सामण्ण-
कारणं तुह केळी । णिअकम्मसत्तिणि-
अआ अच्चुअ वम्हाइठावरन्तविसेस॥१३॥
।विषमगुणाङ्कुरप्रकरे जलमिव सामान्य-
कारणं तव केलिः । निजकर्मशक्तिनिय-
ता अच्चुत ब्रह्मादिस्थावरान्तविशेषाः॥१३॥
पुरिसा तुज्झ विहूई अच्चुअ लच्छीअ
इत्थिआमण्णाओ । णत्थि परं तुज्झाणं
सा वि गिरी होइ तुज्झ किं उण इअर-
म् ॥ १४ ॥ पुरुषास्तव विभूतिरच्युत ल-
क्ष्म्याःस्त्रीसंज्ञाः । नास्ति परं युवयोः सा-

पि श्रीर्भवति तव किं पुनरितरत् ॥१४॥
ण हु तुह सरिसब्भहिआ णाह तुमं एव्व
सव्वलोअसरणो । एआव णाणसारं
इअ मुणिउं तिअसणाह इअरविइन्ता
॥ १५ ॥ न खलु तव सदृशाभ्यधिका
नाथ त्वमेव सर्वलोकशरणः । एताव-
ज्ज्ञानसारमिति ज्ञातुं त्रिदशनाथेतरवि
चिन्ता ॥ १५ ॥ भाइ फणिन्दउराहिव
पडिवालन्तेसु पाअडवहुत्तफला । अवि
दुहिणप्पमुहेहिं आणत्ती तुह अ-
लङ्घणिज्जपहावा ॥ १६ ॥ भाति फ-
णीन्द्रपुराधिप प्रतिपालयत्सु प्रकटप्रभू-
तफला । अपि द्रुहिणप्रमुखैराज्ञप्तिस्तवा-
लङ्घनीयप्रभावा ॥१६॥ णिअमविहीं-
ण पउत्ती सव्वाण वि दाससच्च उद्दिसि
अ तुमम् । सद्धाणीमन्तिअबम्हणसमा-

हिसिद्धं लहन्ति तिअसा भुत्तिम् ॥१७॥
नियमविधीनां प्रवृत्तिः सर्वेषामपि दासस-
त्योद्दिश्य त्वाम् । श्राद्धनिमन्त्रितब्राह्मण-
समाधिसिद्धां लभन्ते त्रिदशा भुक्तिम्॥१७॥
आरज्झतिअसविलए अच्चुअ णिच्चं
ण ठासि जइ णाम तुमम् । कम्माण
कप्पिआणं [१]काहिइ कप्पन्तरेसु को
णिव्वेसम् ॥ १८ ॥ आराध्यत्रिदशवि-
लयेऽच्युत नित्यं न तिष्ठसि यदि नाम
त्वम् । कर्मणां कल्पितानां करिष्यति
कल्पान्तरेषु को निर्वेशम् ॥ १८ ॥ क-
प्पेसि कंखिआइं कप्पदुमो व्व सिरि-
कञ्जणालआसहिओ । णअसच्च स-
इफलाइं [२]णिअच्छाहिणिहिण्णणिच्च-

१. काही—करिष्यति. २. छाहिणिमण्णणिन्तताय—छाया-
भिरवनिर्यताय.

तावतिहुवणो ॥ १६ ॥ कल्पयासि काङ्क्षितानि कल्पद्रुम इव श्रीकाञ्चनलतासहितः । नतसत्य सदाफलानि निजच्छायानिर्भिन्ननित्यतापत्रिभुवनः ॥ १६ ॥ सअलाअमाण णिट्ठा सअलसुराणं वि अन्तरो अप्पाणो । सअलफलाण पसूई सअलजणाणं समो खु णअसच्च तुमम् ॥ २० ॥ सकलागमानां निष्ठा सकलसुराणामप्यन्तर आत्मा । सकलफलानां प्रसूतिः सकलजनानां समः खलु नतसत्य त्वम् ॥ २० ॥ इअ सव्वाण समाणो सच्चट्ठिओ दाससच्च सइ परिपुण्णो । [३]कह वहसि पक्खवाअं पण्डवपमुहेसु पेसणं वि सहन्तो ॥ २१ ॥ इति

३. किह – कस्मात्.

सर्वेषां समानः सत्यस्थितो दासस-
त्य सदा परिपूर्णाः । कथं वहसि प-
क्षपातं पाण्डवप्रमुखेषु प्रेषणामपि सह-
मानः ॥ २१ ॥ विसमम्मि कम्ममग्गे
विपरिक्खलंताण [4]विब्भलिअकरणाणा-
म् । णाह णिहिलाण अण्णो णात्थि
तुमाहि णाअस्सच्च हत्थालम्बो ॥ २२ ॥
विषमे कर्ममार्गे विपरिस्खलतां विह्व-
लितकरणानाम् । नाथ निखिलानामन्यो
नास्ति त्वन्नरस्यापि हस्तालम्बः ॥ २२ ॥
णाणस्स को अविसओ अच्चुअ
करुणाइ तुज्झ को दूरठिओ । सत्तीअ को
अइभगे ता क्खु उवाओ तुमं चिअ
मज्झं सिद्धो ॥ २३ ॥ ज्ञानस्य कोऽविष-
योऽच्युत करुणायास्तव को दूरस्थितः ।

4 बीहलब, बीब्लीभगी

शक्तेः कोऽतिभरस्तस्मात्खलूपायस्त्वमेव स्वयं सिद्धः ॥ २३ ॥ संकप्पकराणाहारो किंकरसच्च भवसाअरे अइगहिरे । अणहो तुमं खु पोओ [1]अप्पाण किवासमीरणेण पउत्तो[2] ॥ २४ ॥ सङ्कल्पकर्णाधारः किङ्करसत्य भवसागरेऽतिगभीरे । अनघस्त्वं खलु पोत आत्मना कृपासमीरणेन प्रयुक्तः ॥ २४ ॥ अच्चुअ ण देन्ति मोक्खं ईसरभावेण भाविआ इअरसुरा । रत्तिं परिवट्टेउं लक्खं आळेक्खदिणअराण वि ण खमम् ॥ २२ ॥ अच्युत न ददति मोक्षमीश्वरभावेन भाविता इतरसुराः । रात्रिं परिवर्तयितुं लक्षमालेख्यादिनकराणामपि न क्षमम् ॥ २५ ॥ अमअरससाअरस्स व

1. अप्पाण किवा—आत्मकृपा. 2. पवट्ठो, पवुत्तो—प्रवृत्तः

अहिन्दउरणाह णिम्मलमहग्घाइम् ।
[1]तीरन्ति ण विगणेउं अणगणसुलहाइ
तुज्झ गुणरश्रणाइम् ॥ २६ ॥ अमृत-
रससागरस्येवाहीन्द्रपुरनाथ निर्मलमहा-
र्घाणि । तीर्यन्ते न विगणयितुमनन्यसु-
लभानि तव गुणरत्नानि ॥ २६ ॥ भू-
सिअगुइसीमन्तो भुअइन्दउरेस सव्व-
गुणसीमन्तो । खविअतिसामलमोहो
मुणीण हिअएसु फुरसि सामलमोहो
॥ २७ ॥ भूषितश्रुतिसीमन्तो भुजगेन्द्र-
पुरेश सर्वगुणसीमान्तः । क्षपिततृषाम-
लमोहो मुनीनां हृदयेषु स्फुरसि श्याम-
लमयूखः ॥ २७ ॥ सुहलक्खणसिरिवच्छो
सोहसि णिम्मुत्तविरइक्खणसिरिवच्छो ।
रणइवणसविहगओ उद्धणगलुलणाइ-

1. तीरन्ति- शक्नुवन्ति शक्यन्ते.

तीरवणासविहगओ ॥ २८ ॥ शुभलक्ष-
णश्रीवत्सः शोभसे निर्मुक्तविरहलक्षण-
श्रीवत्सः । [1]रणदेवनसविहगः उद्भटगरु
डनदीतीरवनसविधगतः[2] ॥ २८ ॥ अकु-
मारजोव्वणठिअं अहिन्दउरणाह अ-
हिमअं अणुरूपम् । णिच्चं सहावसिद्धं
सुव्वइ सूरिमहिअं सुहं तुह रूवम् ॥२६॥
अकुमारयौवनास्थितमहीन्द्रपुरनाथाभि-
मतमनुरूपम् । नित्यं स्वभावसिद्धं श्रूय-
ते सूरिमहितं [3]सुखं तव रूपम् ॥ २६ ॥
तिउणं तस्स विआरा अच्चुअ पुरिसो-
त्ति आअमगणिज्जन्ता । अत्था तुह खु
समत्ता परम्मि रूपम्मि भूसणत्थसरूवा
॥ ३० ॥ त्रिगुणं तस्य विकारा अच्युत
पुरुष इत्यागमगण्यमानाः । अर्थास्तव

---

१. रणद्देवनसविधगतः, २. सविधगजः, ३ शुभं.

खलु समस्ताः परस्मिन्रूपे भूषणास्त्र-स्वरूपाः ॥ ३० ॥ णिन्ति तुमात्रो ग्र-च्चुत्र णिक्खविअविवक्खणिट्ठुरपरक्कम-णा । संठविअपरमधम्मा साहुपरित्ताण-सप्फला ओत्रारा ॥ ३१ ॥ निर्यन्ति त्व-त्तोऽच्युत निक्षपितविपक्षनिष्ठुरपराक्रम-णाः । संस्थापितपरमधर्माः साधुपरित्रा-णासत्फला अवतारा: ॥ ३१ ॥ हरिम-णिसरिच्छणिग्ररुइहरिआअन्तभुग्रइन्द-चुरपरन्तो । काले दासजणाणं करुह-घणो होसि दिण्णकालुणरसो ॥ ३२ ॥ हरिमणिसदृत्तनिजरुचिहरितायमानभु-जगेन्द्रपुरपर्यन्तः । काले दासजनानां कृपा घनो भवसि दत्तकारुणपरसः ॥ ३२ ॥ गलुलणाङकच्छरणो लच्छिवजसि ल-च्छिमाहिकणोकमणाहरो । दीसन्तवहुल-

दाणो दिसागइन्दो व्व [1]खुडिअदणुइन्द-दुमो ॥ ३३ ॥ गरुडनदीकच्छारणये लत्यसे लक्ष्मीमहीकरेणुमनोहरः । दृश्यमानबहुलदानो दिशागजेन्द्र इव खण्डितदनुजेन्द्रद्रुमः ॥ ३३ ॥ मुहचन्दमोलिदिणअरमज्झठिओ तुझ्झ चिहुरभारन्धारो। अघडिअघडणासत्तिं सच्चं ठावेइ दाससच्च समग्गम् ॥ ३४ ॥ मुखचन्द्रमौलिदिनकरमध्यस्थितस्तव चिकुरभारान्धकारः । अघटितघटनाशक्तिं सत्यं स्थापयति दाससत्य समग्राम् ॥ ३४ ॥ परिहसिअपुण्णचन्दं पदुमसरिच्छप्पसण्णालोअणजुअलम् । संकप्पिअदुरिआइ विसम्हरिअं हरइ दाससच्च तुह मुहम् ॥ ३५ ॥ परिहासितपूर्णचन्द्रं पद्मसदृत्तप

---

१. तुडिअ -त्रुटित

सन्नलोचनयुगलम् । संकल्पितदुरितान्यपि संस्मृतं हरति दाससत्य तव मुखम् ॥ ३५ ॥ माहप्पं तुह महिअं मङ्गलिअं तुलसिकोत्थुहप्पमुहाणाम् । अच्चुअ ठिरवणमालं [1]वच्छं दंसेइ लच्छिलक्खणसुहअम् ॥ ३६ ॥ माहात्म्यं तव वहितं माङ्गलिकं तुलसीकौस्तुभप्रमुखाणाम् । अच्युत स्थिरवनमालं वत्सं दर्शयति लक्ष्मीलक्षणसुभगम् ॥ ३६ ॥ णिव्विसइ [2]णिच्चतावो देवअणो देवणाअअ तिहिप्पमुहो । [3]सीअलसन्तपहुत्तं छाहिं तुह विउलबाहुकप्पदुमाणाम् ॥ ३७ ॥ निर्विशति नित्यतापो देवजनो देवनायक त्रिधिप्रमुखः । शीतलशान्तप्रभूता छाया

१. वच्छो दावेइ–वत्सो दापयति. २. णिच्चतावो–नित्यतापो
३. सीअलसन्त–शीतलशान्त.

तव विपुलबाहुकल्पद्रुमाणाम् ॥ ३७ ॥ संकप्पचन्दखोहिअतिउणोअहिविउळबुब्बुअप्पअरेहिम्। बम्हण्डेहि वि भरिअं किंकरसच्च तुह कीस णु किसं उअरम् ॥ ३८ ॥ संकल्पचन्द्रक्षोभितत्रिगुणोदधिविपुलबुद्बुदप्रकरैः। ब्रह्माण्डैरपि भरितं किंकरसत्य तव कस्मान्नु कृशमुदरम् ॥ ३८ ॥ णाहिरुहं तुह णळिणं भुअईसरणअरणाह सोहइ सुहअम्। मज्झठिअबम्हभमरं वच्छासणलच्छिपाअवीढसरिच्छम् ॥ ३६ ॥ नाभिरुहं तव नळिनं भुजगेश्वरनगरनाथ शोभते सुभगम्। मध्यस्थितब्रह्मभ्रमरं वत्सासनलक्ष्मीपादपीठसदृक्षम् ॥ ३६ ॥ दिढपीडिअमहुकइढवसोणिअपडलपरिपाडलम्बरघडिआ। राअइ अच्चुअ मुहला रइणाहगइन्दसिं

खला तुह रसणा ॥ ४० ॥ दृढपीडितमधु-
कैटभशोणितपटलपरिपाटलाम्बरघटिता
राजत्यच्युत मुखरा रतिनाथगजेन्द्रशृङ्खला
तव रशना ॥ ४० ॥ दासाण सच्च दीस-
इ दाणववीराण दीहणिद्दासअणम्
तुह उअरट्ठिअतिहुवणपासाअक्खम्भ-
सच्छअं ऊरुजुअम् ॥ ४१ ॥ दासानां
सत्य दृश्यते दानववीराणां दीर्घनिद्राश-
यनम्। तवोदरस्थितत्रिभुवनप्रासादस्तम्भ
सच्छायमूरुयुगम् ॥ ४१ ॥ जाणुमणि-
दप्पणेण अ जङ्घामरगअकळाइआए
अ धण्णाआ। अच्चुअ ण मुअइ कन्ती
लच्छी व सरोअलञ्छणो तुह चलणो
॥ ४२ ॥ जानुमणिदर्पणेन च जङ्घाम
रकतकलाचिकया च धन्या। अच्युत न
मुञ्चति कान्तिर्लक्ष्मीरिव सरोजलाञ्छ-

नौ तव चरणौ ॥ ४२ ॥ सुइसीमन्तपसूणं सोहइ णअसच्च तुज्झ सव्वसरणम् । कमणखणज णिअसुरणइपस मिअतैल्लोक्कपाअअं पअपउमम् ॥ ४३ ॥ श्रुतिसीमन्तप्रसूनं शोभते नतसत्य तव सर्वशरणयम् । क्रमणक्षणजनितसुरनदीप्रशमितत्रैलोक्यपातकं पदपद्मम् ॥ ४३ ॥ इअ तिहुवणेक्कमूलं [1]आसादेन्ति अण हा अमअसाउरसम् । ओसहिमहिहरपासे उइअं तु ओसवं व दासरुआणम् ॥ ४४ ॥ इति त्रिभुवनैकमूलमास्वादयन्त्यनघा अमृतस्वादुरसम् । ओषधिमहीधरपार्श्वे उदितं त्वामौषधमिव दासरुजाम् ॥ ४४ ॥ सिद्धञ्जणं व सामं तुज्झ तणुं णिअविलोअणेसु खिवन्ता। अच्चु-

१ आसादेन्ति—आसादयन्ति

अ लच्छिणिवासं णिच्चणिऊढं णिहिं व पेच्छन्ति तुमम् ॥ ४५ ॥ सिद्धाञ्जनमिव श्यामां तव तनुं निजविलोचनेषु क्षिपन्तः । अच्युत लक्ष्मीनिवासं नित्यनिगूढं निधिमिव पश्यन्ति त्वाम् ॥ ४५ ॥ विहडिअणिबिडन्धारो घडन्तजोई तिलोअएक्कगहवई । दिट्ठिगओ जाण तुमं णमन्तसञ्ञ ण हु ताण मोहतिआमा ॥ ४६ ॥ विघटितनिबिडान्धकारो घटमानज्योतिस्त्रिलोकैकग्रहपतिः । दृष्टिगतो येषां त्वं नमन्सत्य न खलु तेषां मोहत्रियामा ॥ ४६ ॥ विसअरसम्मि [1]मुवन्ता विआरजणणेहि विअ णहु विकीरन्ता । जीवन्तमुक्कसरिसा अच्चुअ दीसन्ति पावणा तुह भत्ता ॥ ४७ ॥ विषय-

---

१. णिरणा—निरञ्जा

रसे स्वपन्तो विकारजननैरपि च न खलु विक्रियमाणाः। जीवन्मुक्तसदृशा अच्युत दृश्यन्ते पावनास्तव भक्ताः ॥ ४७ ॥

गन्धव्वणअरसिविणअसरिच्छाणं सिरीण वणसरिआणम्। ण सुमरइ तुइयगहिओसरणागअसच्छसइमओ। जीअगओ

गन्धर्वनगरस्वप्नसदृक्षाणां श्रियां वनसरिताम्। न स्मरति त्वद्गृहीतः शरणागतसत्य सदामदो जीवगजः ॥ ४८ ॥

ण महेन्ति णाणवन्ता तरङ्गडिण्डीरबुब्बुअसरिच्छाइम्। विहिपमुहाण पआइं

घणकन्दलिकन्दकअलिखम्भसमाइम् ॥ ४६ ॥ न महयन्ति ज्ञानवन्तस्तरङ्गडिण्डीरबुद्बुदसदृक्षाणि विधिप्रमुखाणां पदानि घनकन्दलिकन्दकदलीस्तम्भसमानि ॥ ४६ ॥ पुलइअसपरसहावा पु-

रिसा घेत्तूण सामिणो तुह सीलम् ।
णाह णअसच्च साघिणा ण मुअन्ति-
कहं वि सव्वजणसोहद्दम् ॥ ५० ॥
दृष्टस्वपरस्वभावाः पुरुषा गृहीत्वा स्वा-
मिनस्तव शीलम् । नाथ नतसत्य सघृ-
णा न मुञ्चन्ति कथमपि सर्वजनसौहा-
र्दम् ॥ ५० ॥ माणमएसामच्छरडम्भा-
सूआमआमरिसलोहमुहा । दीसन्ति ण
मोहमुआ दोसा दासाण सच्चतुह भत्ता-
णम् ॥ ५१ ॥ मानमदेर्ष्यामत्सरदम्भा-
सूयाभयामर्षलोभमुखाः । दृश्यन्ते न मो-
हमुना दोषा दासानां सत्य तव भक्ता-
नाम् ॥ ५१ ॥ जाण मई उद्धमुही का-
लो मच्चलो वि ताण कलिवित्थारो ।
जे तुह पच्चम्मि पवणा णत्थि कली
णाअवङ्गाअव्वइ ताणम् ॥ ५२ ॥

येषां मतिरितरमुखी कालः सकलोऽपि तेषां कलिविस्तारः। ये तव पदे प्रवणा नास्ति कलिर्नागपतिनगरपते तेषाम्॥५२॥ अच्चासणणविणासा अच्चुअ पेच्छन्ति तावए भत्तअणे। मोक्खरुइणा सुमग्गे मूढा दिअहअरमण्डलम्मि व छिद्दम् ॥ ५३ ॥ अत्यासन्नविनाशा अच्युत पश्यन्ति तावके भक्तजने। मोक्षरुचीना सुमार्गे मूढा दिवसकरमण्डल इव च्छिद्रम् ॥ ५३ ॥ [1]णितुडिअदुम्माणघणा णिम्मलगुणघडिअतारआपब्भारा। भासन्तभत्तिजोण्हा णअसत्त फुरन्ति णहणिहा तुह भत्ता ॥ ५४ ॥ निस्त्रुटितदुर्मानघना निर्मलगुणघटिततारकाप्राग्भाराः। भासमानभक्तिज्योत्स्ना नतस-

---

१. णित्तुडिअ—निस्त्रुटित.

न्य स्फुरन्ति नभोनिभास्तवभक्ताः ॥५४॥
णाहु जमविसअम्मि गई णाअसच्च पत्र-
म्बुअं तुह पवराणाणाम । खलिआणवि
जहजोग्गं सिक्खा सुद्धन्ताकिंकराण व
लहुई ॥ ५५ ॥ न खलु यमविषये गति-
र्नतसत्य पदाम्बुजं तव प्रपन्नानाम् ।
स्खलितानामपि यथायोग्यं शिक्षा शुद्धा-
न्तकिंकराणामिव लघ्वी ॥ ५५ ॥ कम्म-
गईदोसदुहिआ² कअन्तभिउडीभुअङ्गिदं-
सणातत्था । अच्चन्ति तुज्झ चलणो अत्तु-
अ पत्थट्ठवम्महरसासाआ ॥ ५६ ॥
कर्मगतिदोषदुःखिताः कृतान्तभ्रुकुटीभु-
जंगीदर्शनत्रस्ताः । अर्चन्ति तव चरणा-
वच्युत प्रभ्रष्टमन्मथरसास्वादाः ॥ ५६ ॥
आलग्गइ तुह चलणो अच्चुअ विहिणा

२. कम्मगहिआ । कोपगविता:

वि अच्चणा आअरिआ । जा एक्कन्तिपउत्ता सेसं व सअं सिरेण पडिगेण्हसि तम् ॥५७॥ आलगति तव चरणावच्युत विधिनाप्यर्चनाचरिता । यैकान्तिप्रयुक्ता शेषामिव स्वयं शिरसा प्रतिगृह्णासि ताम् ॥५७। तुह मुहजोण्हाद्दाविअमाणससासिअन्तपवहसंणिहबाहे। अच्चुअ ण मुअसि भत्ते कलम्बगोलाणिहकराटअन्तणिअङ्गे ॥ ५८ ॥ तव मुखज्योत्स्नाद्रावितमानसशशिकान्तप्रवाहसंनिभबाष्पान् । अच्युत न मुञ्चसि भक्तान्कदम्बगोलनिभकण्टकायमाननिजाङ्गान् ॥ ५८ ॥ सव्वेसु वि णिव्वेरा सरणागअसच्च गहिअसासअधम्मा । गअसङ्गा तुह भत्ता जन्ति तुमं एव्व दुल्लहं डअरेहिम ॥ ५९ ॥ सर्वेष्वपि निर्वैराः शरणागतसत्य गृहीतशा

श्वतधर्माः । गतसङ्गास्तव भक्ता यान्ति त्वामेव दुर्लभमितरैः ॥ ५६ ॥ अहिवइ-णअरिन्द तुमं आसण्णं वि गअणं व सइ दुग्गेज्झम् । विसएसु विलग्गन्ता तुरन्ता विं ण लहन्ति डोलन्तमणा ॥६०॥ अहिपतिनगरेन्द्र त्वामासन्नमपि गगन-मिव सदा दुर्ग्रहम् । विषयेषु विलगन्त-स्त्वरमाणा अपि न लभन्ते डोलायमा-नमनसः ॥ ६० ॥ भत्ता तावअसेवारस-भरिआ सअलरक्खणुस्सुअरुइणा । कर-णाइ धरन्ति चिरं काङ्खिअसोक्खा वि अच्चुअ तुए ठविआ ॥ ६१ ॥ भक्ता-स्तापकसेवारसभरिताः सकलरक्षणो-त्सुकरुचिना । करणानि धरन्ति चिरं काङ्क्षितसौख्या अप्यच्युत त्वया स्था-पिताः ॥ ६१ ॥ ठिरगुणागिरिजाणिएहिं

संतारेसि णअसच्च णिअभत्तेहिम् । जम्मपरिवाडिजलहिं जङ्गमठिरसेउदंसणिज्जेहि जणे ॥ ६२ ॥ स्थिरगुणगिरिजनितैः संतारयसि नतसत्य निजभक्तैः । जन्मपरिपाटीजलधिं जङ्गमस्थिरसेतुदर्शनीयैर्जनान् ॥ ६२ ॥ पसमिअभवन्तरभआ पत्तं पत्तं हिअं ति परिपेच्छन्ता । भावेन्ति तुज्झ भत्ता पिआइहिं व णअसच्च पच्छिमदिअहम् ॥ ६३ ॥ प्रशमितभवान्तरभयाः प्राप्तं प्राप्तं हितमिति परिपश्यन्तः । भावयन्ति तव भक्ताः प्रियातिथिमिव नतसत्य पश्चिमदिवसम् ॥६३॥ पअडतिमिरम्मि भुवणे पत्तपडिट्ठविअपरमणाणपईवा । णिज्जन्ति अच्चुअ तुए णिअं पअं सइ सअंपहं कअकज्जा ॥६४॥ प्रकटतिमिरे भुवने पात्रप्रतिष्ठापितपर-

मज्ञानप्रदीपाः। नीयन्तेऽच्युत त्वया निजं पदं सदा स्वयंप्रभं कृतकार्याः ॥ ६४ ॥ दिढतिव्वभत्तिणत्र्रणा परिपेच्छन्ता त्र्रहिन्दउरणाह तुमम्। पत्ता तुह साउज्जं पन्तिं पूरेन्ति पराराइन्दमुहाणम् ॥६५ ॥ दृढतीव्रभक्तिनयनाः परिपश्यन्तोऽहीन्द्र पुरनाथ त्वाम्। प्राप्तास्तव सायुज्यं पङ्क्तिं पूरयन्ति पन्नगेन्द्रमुखानाम् ॥ ६५ ॥ संणत्र्रसुळहं त्र्रच्चुत्र्र समाहिसोवाणक्कमविलम्बविमुहिआ। सरणं गन्तूण तुमं मुत्ता मुउउन्दसत्तावन्धुप्पमुहा ॥ ६६ ॥ संनतसुलभमच्युत समाधिसोपानक्रमविलम्बविमुखिताः। शरणं गत्वा त्वामुक्ता मुचुकुन्दक्षत्रबन्धुप्रमुखाः ॥ ६६ ॥ देवाण पमुसमाणो जन्तू गन्तूण देवणाह तुह पअम्। तेहिं च्चित्र्र सव्वेहिं

संसरमाणेहि होइ सइ दिण्णबली॥ ६७ ।
देवाना पशुसमानो जन्तुर्गत्वा देवनाथ
तव पदम् । तैरेवसर्वैः संसरमाणैर्भवति
सदा दत्तबलिः ॥ ६७ ॥ मोहन्धारमह-
ण्णवमुच्छिअमाआमहारअणिपच्चूहो ।
अच्चुअ तुज्झ कडक्खो विमुत्तिपत्था-
णपुढमपरिअरबन्धो ॥ ६८ ॥ मोहान्ध-
कारमहार्णवमूर्छितमायामहारजनिप्रत्यूषः।
अच्युत तव कटाक्षो विमुक्तिप्रस्थानप्रथ-
मपरिकरबन्धः ॥ ६८ ॥ मोक्खसुहरुक्-
खमूलं मोहजराउरमहारसाअणपवरम्।
सअलकुसलेक्कखेत्तं किंकरसच्च तुह कि-
त्तणं अमिअणिहम् ॥ ६९ ॥ मोक्षसुख-
वृक्षमूलं मोहजरातुरमहारसायनप्रवरम्
सकलकुशलैकक्षेत्रं किंकरसत्य तव ।
कीर्तनममृतनिभम् ॥ ६९ ॥ णत्थि अ-

ढिक्कमणासो विच्छेअम्मि वि ण पञ्च-
वायपसङ्गो। सप्पा वि तुह सपज्जा
रक्खइ अच्चुअ महत्तराडु भआदो
॥ ७० ॥ नास्त्यभिक्रमनाशो विच्छेदेऽपि
न प्रत्यवायप्रसङ्गः । स्वल्पापि तव
सपर्या रक्षत्यच्युत महत्तराद्भयात् ॥७०॥
अपसाए अपसण्णा तुज्झ पसाअम्मि
दाससत्र पसण्णा । आरज्झा होन्ति
परे किं तेहि पसङ्गलम्भिअपहावेहिम्
॥ ७१ ॥ अपसादे अप्रसन्नास्तव प्रसादे
दासस्य प्रसन्नाः । आराध्या भवन्ति
परे किं तैः प्रसङ्गलम्भितप्रभावैः ॥ ७१ ॥
इअरतिअसा पसण्णा किंकरसत्र मह
किं णु काहिन्ति हिअम् । णाहारघण-
सएहिं णाहु पूरिज्जइ कहं वि चाअअ-
तिणहा ॥ ७२ ॥ इतरत्रिदशाः प्रसन्नाः

किंकरसत्य मम किं नु करिष्यन्ति हितम नीहारघनशतैर्न खलु पूर्यते कथमपि चातकतृष्णा ॥ ७२ ॥ अणुगअसुहमिअतिण्हा अच्चुअ वीसमइ तुज्झ मामअतिण्हा । पवहेसु पसरिआए आसिअपवहन्तघणकिवासरिआए ॥७३॥ अनुगतसुखमृगतृष्णा अच्युत विश्राम्यति तव मामकतृष्णा । प्रवाहेषु प्रसृताया आश्रितप्रवहद्घनकृपासरितः ॥ ७३ ॥ विअलसअलङ्गविसमे धम्मे णाअसच्च धअणिहे धारेन्तो । कन्तारपन्थओ विअ खळन्तचलणो म्हि काअराविसीरन्तो[1] ॥ ७४ ॥ विकलसकलाङ्गविषमान्धर्मान्नतसत्य ध्वजनिभान्धारयन् । कान्तारपान्थक इव स्खल-

१. विइरन्तो-विदीर्यमाण:

चरणोऽस्मि कातरविशीर्यमाणः ॥ ७४ ॥
ठिरधम्मवम्मथइअं अधम्मपवणाण
अग्गक्खन्धपउत्तम् । अघडन्तविपडिसारं
अच्चुअ मं हससि णुणा लच्छिसम-
क्खम् ॥ ७५ ॥ स्थिरधर्मवर्मस्थगितम-
धर्मप्रवणानामग्रस्कन्धप्रवृत्तम् । अघट-
मानविप्रतीसारमच्युत मां हससि नूनं
लक्ष्मीसमक्षम् ॥ ७५ ॥ तरिउं अच्चुअ
दुरिअं इमम्मि देहम्मि एक्कदिअहे वि
कअम् । कालो अलं ण सअलो करु-
णाए तुज्झ पुण्णपत्तं म्हि* इमो ॥७६॥
तरितुमच्युत दुरितमस्मिन्देह एकदिवसे
ऽपि कृतम् । कालोऽलं न सकलः करु-
णायास्तव पूर्णपात्रमस्म्ययम् ॥ ७६ ॥
अच्चुअ तुज्झ गुणाणां सह दोसाणां

---

* पुण्णपत्तं णाम-पूर्णपात्रं नाम.

वि णत्थि कुत्थ वि गणणा । तह वि जओ पुढमाणां अहिअं लीणाणा होइ णहु दोब्बल्लम् ॥ ७७ ॥ अच्युत तव गुणाना मम दोषाणामपि नास्ति कुत्रापि गणना । तथापि जयः प्रथमानामधिकं लीनानां भवति न खलु दौर्बल्यम् ॥७७॥ रत्तिं दिअहं अच्चुअ तुडिअपडन्ताइ आउदुमखण्डाइम् । दठ्ठूण वि दरिअमणं बालं एण्हि वि भरसु मं अपमत्तो ॥ ७८ ॥ रात्रिं दिवसमच्युत [1]त्रुटितपतन्त्यायुर्द्रुमखण्डानि । दृष्ट्वापि दृप्तमनसं बालमिदानीमपि भरस्व माप्रमत्तः ॥ ७८ ॥ णीसाससंकाणिज्जे देहे पडळन्तसलिलविन्दुसरिच्छे । मुणसि णअसच्च [2]तुं मं जरन्तकरणे वि दीहजोव्व-

१. त्रुटितपटायमानायान्यु. २ तुम-त्वं

गातिगदम् ॥ ७६ ॥ निश्वासशङ्कनीये देहे पटलान्तसलिलबिन्दुसदृचे । जानासि नतसत्य त्वं मां जरत्करणोऽपि दीर्घयौवनतृष्णाम्[२] ॥ ७६ ॥ अमुणिअणिअकाअव्वं [४]तिळग्गमुणिएसु मं वि पडिऊळगइम् । इअ णिअसहावविळिअं हाउं दासाण सच्च णाहु तुह जुत्तम् ८० अज्ञातनिजकर्तव्यं तिलाग्रज्ञातेषु मामपि प्रतिकूलगतिम् । इति निजस्वभाववीक्षितं हातुं दासानां सत्प न खलु तव युक्तम् ॥ ८० ॥ कोहं किं करणिज्जं परिहरणिज्जं वि किंति जाणासि मव्वम् । तीरसि अ तं हिअं मह तिअसेस्सर कुणासु णिअहिअआणिकिमत्तम् ॥ ८१ ॥ कोऽहं किं करणीयं

१ तृष्णाम, ४ तुमकणकामुणिमए

परिहरणीयमपि किमिति जानासि सर्वम् । शक्नोषि च तद्धितं मम त्रिदशेश्वर उ-द्धरस्व निजहृदयनिक्षिप्तम् ॥८१॥ एण्हि उवरिं वि इमो गुणगहिओ दारुपुत्तओ व परवसो । तस्स वि मह तिअसेसर तीसु वि करणेसु होसु सुहसंकप्पो ॥ ८२ ॥ इदानीमुपर्य्ययं गुणगृहीतो दारुपुत्रक इव परवशः । तस्यापि मम त्रिदशेश्वर त्रिष्वपि करणेषु भव सुखसंकल्पः ॥ ८२ ॥ णिअकम्मणिअलजुअलं अच्चुअ काऊण मह पिअप्पिअवग्गे । काहे घोरकळेवरकाराघरकुहरणिग्गअं काहिसि मम् । ८३ निजकर्मनिगळयुगळमच्युत कृत्वा मम प्रियाप्रियवर्गे । कदा घोरकळेवरकारागृहकुहरनिर्गतं करिष्यासि माम् ॥ ८३ ॥ इदे तुमम्मि

कइआ विस्समिअं बम्हधमाणिमग्गाणि-
हिन्तम्। दिणाअरदिण्णग्गकरं अच्चुअ
दच्छिहिसि दइअडिम्मं पिअ मम् ॥८४॥
हार्दे त्वयि कदा विश्रान्तं ब्रह्मधमानिमा-
र्गगानिच्यन्तम्। दिनकरदत्ताग्रकरमच्युत
द्रक्ष्यसि दयितडिम्भमिव माम् ॥ ८४ ॥
काहे अमाणावन्ता अग्गिमुहा आइवा-
हिआ तुह पुरिसा। अइलङ्घहिन्ति मिमं
अच्चुअ तमगहणातिउणामरुकन्तारम्
॥ ८५ ॥ कदा अमानवान्ता अग्निमुखा
आतिवाहिकास्तव पुरुषाः। अतिलङ्घ-
यिष्यन्ति मामच्युत तमोगहनात्रिगुणाम-
रुकान्तारम् ॥ ८५ ॥ लग्गिअ विग्आस-
रिअं त्तम्भिअअमइमुद्दस्सतामअमोम्मत-
णुम्। कअबम्हालंकारं काहिसि णाअ-
गव्व किंकरं काहे मम् ॥ ८६ ॥ लङ्घि-

तविरजासरितं लम्भितसदाशुद्धसत्त्वम-
यसौम्यतनुम् । कृतब्रह्मालङ्कारं करिष्य-
सि नतसत्य किंकरं कदा माम् ॥ ८६ ॥
संसारसाअराओ उक्खित्तं तिअसणाह
फुरिआलोअम् । काहे काहिसि हिअए
कोत्थुहमणिदप्पणं व लच्छिपुळइअम्
॥ ८७ ॥ संसारसागरादुत्क्षिप्तं त्रिदश-
नाथ स्फुरितालोकम् । कदा करिष्य-
सि हृदये कौस्तुभमणिदर्पणमिव लक्ष्मी-
हृष्टम्॥ ८७ ॥काहे तुह पअपउमे होहि-
मि णअसच्च केळिकन्ततिहुवणे । मअ-
णारिउमउडमण्डणसुरसरिआसोत्तसूइअ-
महुप्पवहे ॥ ८८ ॥ कदा तव पादपद्मे
भविष्यामि नतसत्य केळिक्रान्तत्रिभुवने।
मदनरिपुमकुटमण्डनसुरसरित्स्रोतः सू-
चितमधुप्रवाहे ॥ ८८ ॥ उवणिसअसि-

रकुसुमं उत्तंसेऊण तुह पअम्बुअजुअलम । दइओ होहिमि कइआ दासो दासाण सच्च सूरिसारिच्छो ॥ ८९ ॥ उपनिषद्भिः कुसुममुत्तंस्य तव पदाम्बुजयुगलम् । दयितो भविष्यामि कदा दासो दासानां सत्य सूरिसदृक्षः ॥ ८९ ॥ अउणोणिउत्तिजोग्गं ओआरविहारसहअरत्तणधणिअम । अप्पसमभोअमेत्तं अणुहोहिसि देवणाह काहे णु मिमम् ॥ ९० ॥ अपुनर्निवृत्तियोग्यमवताराविहारसहचरत्वधन्यम् । आत्मसमभोगमात्रमनुभविष्यसि देवनाथ कदा नु माम् ॥ ९० ॥ इअ फुडमणोरहं मं एआरिसवअणमेत्तसारं वमअम् । कुणसु णिअगुणगणेहिं सच्चं दासाण सच्च सड सच्छन्दो ॥ ९१ ॥ इति स्फुट-

मनोरथं मामेतादृशवचनमात्रसारं वशगम् । कुरुष्व निजगुणगणैः सत्यं दासनां सत्य सदा स्वच्छन्दः ॥ ६१ ॥ बालपवगोऽव तरलो मारुइजाइत्ति साअरं तरिउमणो । पत्थेमि तुमं अच्चुअ कङ्किअपअपउम खमसु मह कावेअम् ॥ ६२ ॥ बालप्लवग इव तरलो मारुतिजातिरिति सागरं तरितुमनाः । प्रार्थये त्वामच्युत काङ्क्षितपदपद्म क्षमस्व मम कापेयम् ॥ ६२ ॥ अच्चुअ विसअक्कन्तं भवण्णवावत्तभमिणिबुड्डिज्जन्तम् । जणणी थणंधअं विअ मं उद्धरिउण सेवसु सअं पच्छम् ॥ ६३ ॥ अच्युत विषयाक्रान्तं भवार्णवावर्तभ्रमिनिमज्जन्तम् । जननी स्तनंधयामिव मामुद्धृत्य सेवस्व स्वयं पथ्यम् ॥ ६३ ॥ कम्ममअघम्म-

ठावेसु तुमम्मि णिम्ममं मह हिअअम्
॥ ६६ ॥ विषमिलितमधुनिभेषु च तृणा-
प्रतिमेषु च प्रतिग्रहेषु प्रलुठितम् । अमृ-
तनिधाविवाच्युत स्थापय त्वयि निर्ममं
मम हृदयम् ॥ ६६ ॥ णिच्चं इमम्मि
किवणो णिक्खिवसु णमन्तसच्च णिहि-
सारिच्छे । पवहन्तणहपहाभ्करपसमि-
अपणमन्तसंजरे तुह चलणे ॥ ६७ ॥
नित्यमस्मिन्कृपणो निक्षिप नमत्सत्य
निधिसदृशौ । प्रवहन्नखप्रभाझरप्रशमि-
तप्रणमत्संज्वरौ तव चरणौ ॥ ६७ ॥
सरणागओत्ति जणिए जणवाए वि
जइ अच्चुअ ण रक्खसि ममं । होज्ज
खु साअरघोसो साअरपुलिणम्मि ता-
रिसं तुह वअणम् ॥ ६८ ॥ शरणागत
इति जनिते जनवादेऽपि यद्यच्युत न

तविअं सुहमिअतिराहाहि काहि वि अतिराहाअम्[१] । कारेसु णिव्वुअं मं करआसिसिरेहि अच्चुअ कडक्खेहिम् ॥ ९४ ॥ कर्मभयघर्मतप्तं सुखमृगतृष्णाभिः काभिरप्यतृष्णाकम् । कारय निर्वृतं मां करकाशिशिरैरच्युत कटाक्षैः ॥ ९४ ॥ तुह चिन्तणाविमुहाणं दिट्ठिविसाणं व दंसणाउ मोएन्तो[२] । अमअमुहाणं विअ मं अच्चुअ भत्ताण णेसु णअणूसारम् ॥ ९५ ॥ तव चिन्तनविमुखानां दृष्टिविषाणामिव दर्शनान्मोचयन् । अमृतसुखानामिव मामच्युत भक्तानां नयस्व नयनासारम् ॥ ९५ ॥ वित्तमित्तिअमहुणाहेसु अतिणापाडिमेसु पडिग्गहेसु पत्तुटिअम् । अमअणिहिम्मि व अच्चुअ

१. कारिअतिण्हाअं कारितृष्णाकम् २. मुअन्तो मुञ्चन्.

रचयसिमाम् । भवेत्खलु सागरघोषः सागरपुत्त्रिने तादृशं तव वचनम् ॥९८॥ णिक्खित्तो म्हि अ अगई णिउणोहि तुमम्मि णाह कारुणिएहिम् । ते तुह दट्ठूण पिए [1]भरिअं णअसच्च भरसु अप्पाण भरम् ॥ ९९ ॥ निक्षिप्तोऽस्मि चागतिर्निपुणैस्त्वयि नाथ कारुणिकैः । तांस्तव दृष्ट्वा प्रियान् भृतं नतसत्य भरस्वात्मनो भरम् ॥ ९९ ॥ णअसच्च पक्कणाणिअगलिअ्रचिलाअभमाणिअ-कुमारं व णिवो । होज्जन्तजोव्वणवहुवरोव्व मं लहसु मन्तिअणाविणाविअम् ॥ १०० ॥ नतसत्य पक्कणानीतगलितकिरातभ्रमानिजकुमारमिव नृपः । भविष्यद्यौवनवधूंवर इव मां लभस्व मन्त्रि

---

१ भरिअं भृतम्

जनविज्ञापितम् ॥ १०० ॥ इअ कइ-तक्किअकेसरिवेअन्ताआरिअवेङ्कडेसविरइअम् । सुहअं अच्चुअसअअं सहिअअहिअएसु सोहउ समग्गगुणम् ॥ १०१ इति कवितार्किककेसरिवेदान्ताचार्यवेङ्कटेशविरचितम् । [2]सुभगमच्युत शतकं सहृदयहृदयेषु शोभतां समग्रगुणम् ॥ १०१ ॥

॥ अच्चुअसअअं संपुण्णम् ॥

॥ अच्युतशतकं संपूर्णम् ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः॥

२ शुभदमच्युत सुखदमच्युत.

# अथाच्युताष्टकम् ।

अच्युतं केशवं रामनारायणं कृष्ण-
दामोदरं वासुदेवं भजे ॥ श्रीधरं माधवं
गोपिकावल्लभं जानकीनायकं रामचन्द्रं
हरिम् ॥ १ ॥ अच्युतं केशवं सत्यभामा-
धवं माधवं श्रीधरं राधिकाराधनम् ॥
इन्दिरामन्दिरं चेतसा सुन्दरं देवकीनन्दनं
नन्दजं संदधे ॥ २ ॥ विष्णवे जिष्णवे
शङ्खिने चक्रिणे रुक्मिणीरागिणे
जानकीजानये ॥ वल्लवीवल्लभायाजिता-
यात्मने कंसविध्वंसिने वंशिने ते नमः
॥ ३ ॥ कृष्ण गोविन्द हे राम नारायण
श्रीपते वासुदेवाजित श्रीनिधे ॥ अच्यु-

तानन्त हे माधवाधोक्षज द्वारकानायक द्रौपदीरक्षक ॥ ४ ॥ राक्षसक्षोभितः सीतयाशोभितो दण्डकारण्यभूपुण्यताकारणम् ॥ लक्ष्मणेनान्वितो वानरैः सेवितोऽगस्तिना पूजितो राघवः पातु माम् ॥ ५ ॥ धेनुकारिष्टकानिष्टकृद्द्वेषिणा केशिहा कंसहृद्वंशिकावादकः ॥ पूतनाशोषकः सूरजाखेलनो बालगोपालकः पातु मा सर्वदा ॥ ६ ॥ वैद्युतद्योतका-संस्फुरद्वाससा प्रावृडम्भोदवत्प्रोल्लसद्विग्रहम् ॥ वैजयन्तीप्रभाशोभितोरस्थलं लोहिताङ्घ्रिद्वयं वारिजाक्षं भजे ॥ ७ ॥ कुञ्चितैः कुन्तलैर्भ्राजमानाननं रत्नमौलिं लसत्कुण्डलं गण्डयोः ॥ हारकेयूरिणं किङ्किणीजाज्वलं किङ्किणीमञ्जुलं श्यामलं भावये ॥ ८ ॥ अच्युतस्याष्टकं यः

विश्राणयन्प्रणयिनां विविधान्पुमर्थान्
गोप्ता स मे भवतु गोपपुराधिराजः ॥१॥
देहल्यधीश्वर तवेदृशमीश्वरत्वं [1]तुष्टूषतां
दिशति गद्गदिकानुबन्धम् । [2]वाचालय-
स्यथ च मां क्वचन त्रपायां क्षान्तेन दा-
न्तकविमुख्यविमर्दनेन ॥ २ ॥ त्वच्चक्रव-
द्भुतमनेहसि घूर्णमाने निम्नोन्नतक्रमनि-
दर्शितनामिवृत्ताः । आराध्य गोपनगरे
कृपयोदितं त्वां स्वाराज्यमग्र्यमलभन्त
सुरासुरेन्द्राः ॥ ३ ॥ आकल्पपुष्पसुभगो-
न्नतबाहुशाखः पादे सदा परिपचेलिमस-
त्फलस्त्वम् । पर्णातटस्पृशि मृकण्डु-
तपोवनेऽस्मिन् [1]छायानिलीनभुवनोऽसि
तमालशाखी ॥ ४ ॥ चक्रस्य दैत्यदनु-
जादिषु वामभावं शङ्खस्य चाश्रितजने-

---

१ तुष्टूषतो. २ वाचालयस्यथ. १ छायावलीनसुभगोऽसि

ष्वपि [2]दाक्षिणात्यम् । त्वपक्कं प्रदर्शयसि गोपपुराधिराज व्यत्यस्य नूनमनयोः करसंप्रयोगम् ॥ ५ ॥ [3]दीपेन केनचिदशीतरुचा निशीथे स्नेहोपपन्नपरिशुद्धगुणार्पितेन । [4]इक्ष्वाकुकाणनिबिड ददृशुर्भवन्तं स्वाध्याययोगनयनाः शुचयः कवीन्द्राः ॥ ६ ॥ कासारपूर्वकविमुख्यविमर्दजन्मा पण्णानटेक्षुगुणभगम्य रसो वहन्ने । स्वादप्रमधुनि त्वदनन्यभोग्ये नूनं समाश्रयति नूतनशर्करत्वम् ॥ ७ ॥ वैरोचनेः मखभुवि वामनभूमिकायां विक्रान्तिताण्डवरसेन विजृम्भमाणः । चक्रे भवान्मकरकुण्डलकर्णपाशः । श्यामैकमेघमहिमानमिव सप्तलोकीम् ॥ ८ ॥

---

[1] [illegible] [3] दीपेन [illegible] निशीथे

[2] [illegible] [4] [illegible]

चित्रं न तत्त्रिषु मितानि पदेषु धत्ते विश्वा-
न्यमूनि भुवनानि विशङ्कटेषु । भक्तै
स्समं क्वचिदसौ भवनैकदेशे माति स्म
मूर्तिरमिता तदिहाद्भुतं नः ॥ ९ ॥ भक्त-
प्रिय त्वयि तथा परिवर्धमाने मुक्तावि-
तानवितातिस्तव पूर्वमासीत् । हारावलिः
परमथो रशनाकलापस्ताराङ्गणास्तदनु
मौक्तिकनूपुरश्रीः ॥ १० ॥ भिक्षोचितं
प्रकटयन्प्रथमाश्रमत्वं कृष्णाजिनं यव-
निकां कृतवान्प्रियायाः । व्यक्ताकृतेस्तव
समीक्ष्य भुजान्तरे तां त्वामेव गोपनग-
रीश जना विदुस्त्वाम्[१] ॥ ११ ॥ सत्कु-
र्वतां तव पदं चतुराननत्वं पादोदकं च
शिरसा वहतां शिवत्वम् । एकत्र विक्र-
मणकर्मणि तद्द्वयं ते देहल्यधीश युग-

१. विदुस्ते

पत्मयितं पृथिव्याम् ॥ १२ ॥ भक्तोपरोधसह पादसरोजतस्ते मन्दाकिनी विगलिता मकरन्दधारा । सद्यस्त्रिवर्गमपवर्गमपि क्षरन्ती पुण्या बभूव पुरशासनमौलिमाला ॥ १३ ॥ विक्रान्तिकेतुपटिका पदवाहिनी ते न्यञ्चन्त्युपैति नतजीवित शिंशुमारम् । औत्तानपादिममृतांशुमशीतभानुं हेमाचलं पशुपतिं हिमवन्तमुर्वीम् ॥ १४ ॥ वेधःकमण्डलुजलैर्विहितार्चनं ते पादाम्बुजं प्रतिदिनं प्रतिपद्यमाना । स्रोतस्विनीव त्रिपथगादिसरिद्गणानां पण्यात बभूव भुवने बहुमानपात्रम् ॥ १५ ॥ न्यक्कुर्वन्त्रिविक्रमगमपुनर्मितादमुष्मान्क्रान्तत्वयं यदभवत्तव पादपद्मात् । यत्ताल्लमृतगरमामपदिश्य यानं मायेन नन्मनवभूमिमवाप भूयः ॥ १६ ॥ क्रीडापरेण भवता

विहितोपरोधानाराधकाननुपरोधमुदञ्च-
यिष्यन् । [1]तारेण पादनखरेण तदाण्ड-
मध्ये घण्टापथं कमपि नूनमवर्तयस्त्वम्
॥ १७ ॥ [2]कामाविलेऽपि करुणार्णव-
बिन्दुरेकः क्षिप्तः स्वकेलितरसा तव देह-
लीश । [3]तत्संततेरुभयथा विततिं भज-
न्त्याः[4] संसारदावदहनं शमयत्यशेषम्
॥ १८ ॥ नीडोदरान्निपातितस्य शुकार्भ-
कस्य त्राणेन नाथ विहरन्निव सार्वभौमः
। आदाय गोपनगराधिपते स्वयं मां
क्रीडादयाव्यतिकरेण कृतार्थय त्वम्[5]
॥ १९ ॥ लीलाशकुन्तमिव मां स्वपदो-
पलब्ध्यै स्वैरं क्षिपन्दुरितपञ्जरतो गुण-
स्थम् । तत्तादृशं कमपि गोपपुरीविहारिन्

---

१ तारेण २ कामावलेऽपि करुणा ३ तत्संततेरु
४ भजन्त्न ५ स्वम

मल्पबुद्धेर्यन्मन्यसे मम हितं [३]तदुपाद-
दीथाः ॥ २४ ॥ मन्ये दयार्द्रहृदयेन महा-
धनं मे [४]दत्तं त्वयेदमनपायमकिंचनत्वम्
। येन स्तनंधयमिव स्वहितानभिज्ञं न्या-
सीकरोषि निजपादसरोरुहे माम् ॥२५॥
दुर्वारतीव्रदुरितप्रतिवावदूकैरौदार्यवद्भिरन-
घस्मितदर्शनीयैः । देहल्यधीश्वर दयाभ-
रितैरपाङ्गैर्वाचं विनापि वदसीव मयि
प्रसादम् ॥ २६ ॥ अयमनवमसूक्तैरादि-
भक्तैर्यथाव [१]द्विशदितनिजतत्त्वो विश्वम-
व्यादभव्यात् । रथचरणनिरूढव्यञ्जना-
नांजननां दुरितमथनलीलादोहली देह-
लीशः ॥ २७ ॥ इयमवितथवर्णा वर्ण-
नीयस्वभावा द्विदितनिगमसीम्ना वेङ्कटे-

---

३ तदुपानयेथा ४ व्यक्तं त्वयैतदनपाय

१ द्विदितनिजसुतत्त्वो

शेन गीता । भवमरुभुवि तृष्णालोभ-पर्याकुलानां दिशतु फलमभीष्टं देहली-शस्तुतिर्नः ॥ २८ ॥

॥ देहलीशस्तुतिः संपूर्णा ॥



कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥श्रीमते निगमान्तमहादेशिकाय नमः ॥

॥ श्रीः ॥

# ॥ रघुवीरगद्यम् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

जयत्याश्रितसंत्रासध्वान्तविध्वंसनोदयः।
प्रभावान्सीतया देव्या परमव्योमभास्करः॥

जय जय महावीर, महाधीरधौरेय, देवासुर[1] समर समय समुदित निखिल निर्जरनिर्धारित निरवधिक माहात्म्य, दशवदन दमित दैवत परिषदभ्यर्थित-

---

१ देवासुरमहासमर

दाशरथिभाव. दिनकर कुल कमल दिवाकर. दिविषदधिपति रणसहचरण चतुरदशरथ चरमऋणविमोचन, कोसल-सुताकुमारभाव कञ्चुकितकारणाकार. कौमारकेलिगोपायित कौशिकाध्वर, रणाध्वरधुर्यभव्य दिव्यास्त्रवृन्दवन्दित प्रणतजनविमत विमथन दुर्ललित दोर्ललित. तनुतरविशिखविताडन विघ-टितविशरारु शरारु ताटकाताटकेय, जटकिरणशकलधरजटिलनटपतिमकुट तटनटनपटुविबुधसरिदतिबहुलमधुगलन ललितपदनलिनरजउपमृदितनिजवृजिन जरदुपलतनुरुचिरपरममुनिवरयुवतिनुत. कुशिकसुतकथितविदितनवविविधकथ. मैथिलनगरसुलोचनालोचनचकोरचन्द्र, ख-

गडपरशुकोदगडप्रकाण्डखण्डनशौण्डभुजदण्ड, चण्डकरकिरणमण्डलबोधितपुण्डरीकवनरुचिलुण्टाकलोचन, मोचितजनकहृदयशङ्कातङ्क, परिहृतनिखिलनरपतिवरणजनकदुहितृकुचतटविहरणसमुचितकरतल, शतकोटिशतगुणकठिनपरशुधरमुनिवरकरधृतदुरवनमतमनिजधनुराकर्षणप्रकाशितपारमेष्ठ्य, [1]क्रतुहरशिखरिकन्तुकविहृतिमुखजगदरुन्तुदजितहरिदन्तदन्तुरोदन्तदशवदनदमनकुशलदशशतभुजमुखनृपतिकुलरुधिरझरभरितपृथुतरतटाकतर्पितपितृकभृगुपतिसुगतिविहतिकरनतपरुडिषुपरिघ, अनृतभयमुषितहृदयपितृवचनपालनप्रतिज्ञावज्ञातयौवराज्य, निषादराजसौहृदसूचित-

---

१ विहृत्युन्मुख, हरिद्दन्तिदन्तदन्तुरदशवदन. हरिदन्तदन्तुर

दाशरथिभाव, दिन कर कुल कमल दिवाकर, दिविषदधिपति रणसहचरण चतुरदशरथ चरमऋणविमोचन, कोसल-सुताकुमारभाव कञ्चुकितकारणाकार, कौमारकेलिगोपायित कौशिकाध्वर, रणाध्वरधुर्यभव्य दिव्यास्त्रवृन्दवन्दित प्रणतजनविमत विमथन दुर्ललित दोर्ललित, तनुतरविशिखविताडन विघटितविशरारु शरारु ताटकाताटकेय, जडकिरणशकलधरजटिलनटपतिमकुट तटनटनपटुविबुधसरिदतिबहुलमधुगलन ललितपदनलिनरजउपमृदितनिजवृजिन जहदुपलतनुरुचिरपरममुनिवरयुवतिनुत, कुशिकसुतकथितविदितनवविविधकथ, मैथिलनगरसुलोचनालोचनचकोरचन्द्र,ख-

गडपरशुकोदगडप्रकागडखण्डनशौगडभुजदगड, चण्डकरकिरणमण्डलबोधितपुगडरीकवनरुचिलुगटाकलोचन, मोचितजनकहृदयशङ्कातङ्क, परिहृतनिखिलनरपतिवरणजनकदुहितृकुचतटविहरणसमुचितकरतल, शतकोटिशतगुणकठिनपरशुधरमुनिवरकरधृतदुरवनमतमनिजधनुराकर्षणप्रकाशितपारमेष्ठ्य, [1]क्रतुहरशिखरिकन्तुकविहृतिमुखजगदरुन्तुदजितहरिदन्तदन्तुरोदन्तदशवदनदमनकुशलदशशतभुजमुखनृपतिकुलरुधिरझरभरितपृथुतरतटाकतर्पितपितृकभृगुपतिसुगतिविहतिकरनतपरुडिषुपरिघ, अनृतभयमुषितहृदयपितृवचनपालनप्रतिज्ञावज्ञातयौवराज्य, निषादराजसौहृदसूचित-

1 विहृत्युन्मुख, हरिद्दन्तिदन्तदन्तुरदशवदन. हरिदन्तदन्तुर

सौशील्यसागर, [२]भरद्वाजशासनपरिगृहीतविचित्रचित्रकूटगिरिकटकतटरम्यावसथ अनन्यशासनीय, प्रणतभरतमकुटतटसुघटितपादुकाग्र्याभिषेकनिर्वर्तितसर्वलोकयोगक्षेम, पिशितरुचिविहितदुरितवलमथनतनयबलिभुगनुगतिसरभसशयनतृणशकलपरिपतनभयचकितसकलसुरमुनिवरबहुमतमहास्त्रसामर्थ्य, [३]द्रुहिणहरवलमथनदुरालक्षशरलक्ष, दण्डकातपोवनजङ्गमपारिजात, विराधहरिणशार्दूल, विलुलितबहुफलमखकलमरजनिचरमृगमृगयारम्भसंभृतचीरभृदनुरोध, त्रिशिरशिरस्त्रितयतिमिरनिरासवासरकर, दूषणजलनिधिशोषणतोषितऋषिगणघोषि-

२ परिगृहीतचित्रकूट, ३ वलमथनदुरालक्ष्यशरलक्ष्य

तविजयघोषणा, खरतरखरत्तरुखण्डनच-
ण्डपवन, द्विसप्तरक्षःसहस्रनळवनविलो
लनमहाकलभ, असहायशूर, अनपायसा-
हस, [१]महितमहामृधदर्शनमुदितमैथिली-
दृढतरपरिरम्भणविभवविरोपितविकट-
वीरव्रण, मारीचमायामृगचर्मपरिकर्मित-
निर्भरदर्भास्तरण, विक्रमयशोलाभवि-
क्रीतजीवितगृध्रराजदेहदिधक्षालक्षित-
भक्तजनदाक्षिण्य, कल्पितविबुधभावक-
बन्धाभिनन्दित, अवन्ध्यमहिमसुनिज-
नभजनमुषितहृदयकलुषशबरीमोक्षसा-
क्षिभूत, प्रभञ्जनतनयभावुकभाषितर-
ञ्जितहृदय, [२]तरणिसुतशरणागतिपरत-
न्त्रितस्वातन्त्र्य, दृढघटितकैलासकोटि-
विकटदुन्दुभिकङ्कालकूटदूरविक्षेपदक्षद-

---

१ परिरम्भणविभ्रमविलो. २ परतन्त्रीकृत.

क्षितियोत्तरपादाङ्गुष्ठदरचलनविभ्रान्तसुहृदाशय, अतिपृथुलबहुविटपिगिरिधरणिविवरयुगपदुदयाविवृतचित्रपुङ्खवैचित्र्य, विपुलभुजशैलमूलनिबिडनिपीडितरावणारणाकजनकचतुरुदधिविहरणचतुरकपिकुलपतिहृदयविशालशिलातलदारणदारुणशिलीमुख, [1]अपारपारावारपरिखापारिवृतपरपुरपरिसृतदवदहनजवनपवनभवकपिवरपरिष्वङ्गभावितसर्वस्वदान, [2]अहितसहोदररक्षःपरिग्रहविसंवादिविविधसचिवविप्रलम्भसमयसंरम्भसमुज्जृम्भितसर्वेश्वरभाव, सकृत्प्रपन्नजनसंरक्षणदीक्षित[3], वीर, सत्यव्रत, प्रतिशयनभूमिकाभूषितपयोधिपुळिन, प्रळयशि-

---

१ परपुरदवदहन. २ विमतसहोदर, विप्रलम्भसंरम्भविजृम्भित. ३ दीक्षित, सत्यव्रत.

स्विपरुषविशिखशिखाशोषिताकूपारवारिपूर, प्रबलरिपुकलहकुतुकचटुलकपिकुलकरतलतुलितहृतगिरिनिकरसाधितसेतुपथसीमसीमान्तितसमुद्र[1], द्रुतगतितरुमृगवरूथिनीनिरुद्धलङ्कावरोधवेपथुलास्यलीलोपदेशदेशिकधनुर्ज्याघोष, [2]गगनचरकनकगिरिगरिमधरनिगममयनिजगरुडगरुदनिललवगळितविषवदनशरकदन, [3]अकृतचरवनचररणकरणवैलक्ष्यकूणिताक्षवहुविधरक्षोबलाध्यक्षवक्षःकवाटपाटनपटिमसाटोपकोपावलेप, कटुरटदटनिटंकृतिचटुलकठोरकार्मुक, विशङ्कटविशिखविताडनाविघटितमकुटाविह्वलविश्रवस्तनयविश्रमसमयविश्राणन-

१ सीमासीमन्तित. २ निगममयनिजरथगरुदनिल. ३ वैलक्ष्यशोणिताक्षविरूपाक्षधूम्राक्षवहुविधरक्षो.

विख्यातविक्रम, [1]कुम्भकर्णकुलगिरिवि-
दळनदम्भोळिभूतनिःशङ्ककङ्कपत्र, अ-
भिचरणहुतवहपरिचरणविघटनसरभस-
परिपतदपरिमितकपिबलजलधिलहरि-
कलकलरवकुपितमघवजिदभिहननकृद-
नुजसाक्षिकराक्षसद्वन्द्वयुद्ध, अप्रतिद्वन्द्व-
पौरुष, त्र्यम्बकसमधिकघोरास्त्राडम्बर,
सारथिहृतरथसत्रपशात्रवसत्यापितप्रताप,
[2]शितशरकृतलवनदशमुखमुखदशकनिः
पतनपुनरुदयदरगळितजनितदरतरळह-
रिहयनयननलिनवनरुचिखचितनिपतित-
सुरतरुकुसुमवितानसुरभितरथपथ, [3]अ-
खिलजगदधिकभुजबलवरबलदशलपन-
लपनदशकलवनजनितकदनपरवशरज-

१ कुम्भकर्णगिरि. २ खचितकरतलनिपतित.
३ जनितरजनिचर.. मुखसुरमुनिवर.

निचरयुवतिविलपनवचनसमविषयनिगमशिखरनिकरमुखरमुखमुनिवरपरिपणित, अभिगतशतमखहुतवहपितृपतिनिर्ऋतिवरुणपवनधनदगिरिशमुखसुरपतिनुतिमुदित, अमितमतिविधिविदितकथितनिजविभवजलधिपृषतलव, विगतभयविबुधविबोधितवीरशयनशायितवानरपृतनौघ, [1]स्वसमयविघाटितसुघटितसहृदयसहधर्मचारिणीक, विभीषणवशंवदीकृतलङ्कैश्वर्य,निष्पन्नकृत्य,खपुष्पितरिपुपक्ष, पुष्पकरभसगतिगोष्पदीकृतगगनार्णव [2]प्रतिज्ञार्णवतरणकृतक्षणभरतमनोरथसंहितसिंहासनाधिरूढ, स्वामिन् , राघवसिंह, [3]हाटकगिरिकटकलडहपादपीठ-

१ सुघटितहृदय. २ कृतरक्षणभरतमनोरथ, सिंहासन ३ कटकपटिमपाटनलटह.

निकटतटपरिलुठितनिखिलनृपतिकिरीटकोटिविविधमणिगणकिरणनिकरनीराजितचरणराजीव, *दिव्यभौमायोध्याधिदैवत, पितृवधकुपितपरशुधरमुनिविहितनृपहननकदनपूर्वकालप्रभवशतगुणप्रतिष्ठापितधार्मिकराजवंश, †शुभचरितरतभरतखर्वितगर्वगन्धर्वयूथगीतविजयगाथाशत, शासितमधुसुतशत्रुघ्नसेवित, ‡कुशलवपरिगृहीतकुलगाथाविशेष, विधिवशपरिणमदमरभणितिकविवरचितनिजचरितनिबन्धननिशमननिर्वृत, सर्वजनसंमानित, पुनरुपस्थापितविमानवरविश्राणनप्रीणितवैश्रवणविश्रावितयशःप्रपञ्च, पञ्चतापन्नमुनिकुमा-

* दिव्यभूमायोध्याधिदैवते. † शुभरतभरत. ‡ परिगृहीत कुशीलवाहृगाथविशेषविधिवश......निर्वृतसर्वजन.

रसंजीवनामृत, त्रेतायुगप्रवर्तितकार्तयुग-
वृत्तान्त, [1]अविकलबहुसुवर्णहयमखस-
हस्रनिर्वहणनिर्वर्तितनिजवर्णाश्रमधर्म,
सर्वकर्मसमाराध्य, सनातनधर्म, [2]सा-
केतनजनपदजनिधनिकजंगमतदितरज-
न्तुजातदिव्यगतिदानदर्शितनित्यनिःसी-
मवैभव, भवतपनतापितभक्तजनभद्राराम,
श्रीरामभद्र, नमस्ते पुनस्ते नमः ॥

[3]चतुर्मुखेश्वरमुखैः पुत्रपौत्रादिशालिने ।
नमः सीतासमेताय रामाय गृहमेधिने ॥

कविकथकसिंहकथितं कठोरसुकुमारगुम्भगम्भीरम् ।
भवभयभेषजमेतत्पठत महावीरवैभवं सुधियः ॥

॥ रघुवीरगद्यं संपूर्णम् ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

---

१ कविकुलबहु. २ साकेतजनपदधनिक. ३ नमः प्रजेशप्रमुखैः

## ❋ अथ अभीतिस्तवप्रारम्भः ❋



श्रीमते रामानुजाय नमः ॥ श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ॥ वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥ १ ॥ अभीतिरिह यज्जुषां यदवधीरितानां भयं भयाभयविधायिनो जगति यन्निदेशे स्थिताः ॥ तदेतदतिलङ्घितद्रुहिणशंभुशक्रादिकं रमासखमधीमहे किमपिरङ्गधुर्यं महः ॥ २ ॥ दयाशिशिरिताशया मनसि मे सदा जाग्रतु श्रियाध्युषितवक्षसः श्रितमरुद्वृधासैकताः ॥ जगद्दुरितघस्मरा जलधिडिम्भडम्भस्पृशः सकृत्प्रणतरक्षणप्रथितसंविदः संविदः ॥ ३ ॥ यदप्यमितबुद्धिना बहुलमोहभा-

जा मया गुणग्रथितकायवाङ्मनसवृत्तिवैचित्र्यतः ॥ अतर्किताहिताहितक्रमविशेषमारभ्यते तदप्युचितमर्चनं परिगृहाण रङ्गेश्वर ॥ ४ ॥ मरुत्तरणिपावकत्रिदशनाथकालादयः स्वकृत्यमधिकुर्वते त्वदपराधतोबिभ्यतः ॥ महत्किमपि वज्रमुद्यतमिवेति यच्छ्रूयते तरत्यनघतद्भयं य इह तावकः स्तावकः ॥ ५ ॥ भवन्तमिह यः सुधीर्नियतचेतनाचेतनं पनायति नमस्यति स्मरति वक्ति पर्येति वा ॥ गुणं कमपि वेत्ति वा तव गुणेशगोपायितुः कदाचन कुतश्चन क्वचन तस्य न स्याद्भयम् ॥ ६ ॥ स्थिते मनसि विग्रहे गुणानि धातुसाम्ये सति स्मरेदखिलदेहिनं य इह जातुचित्त्वामजम् ॥ तयैव खलु संधया तमथ दीर्घनिद्रावशं स्वयं विहि-

तसंस्मृतिर्नयसि धाम नैःश्रेयसम् ॥७॥
रमादयित रङ्गभूरमण कृष्ण विष्णो हरे
त्रिविक्रम जनार्दन त्रियुगनाथ नारा-
यण ॥ इतीव शुभदानि यः पठति ना-
मधेयानि ते न तस्य यमवश्यता नरक-
पातभीतिः कुतः ॥ ८ ॥ कदाचिदपि रङ्ग-
भूरसिक यत्र देशे वशी त्वदेकनियता-
शयस्त्रिदशवन्दितो वर्तते ॥ तदत्त-
ततपोवनं तव च राजधानी स्थिरा सुख-
स्य सुखमास्पदं सुचरितस्य दुर्गं महत्
॥ ९ ॥ त्रिवर्गपथवर्तिनां त्रिगुणलङ्घनो-
द्योगिनां द्विषत्प्रमथनार्थिनामपि च रङ्ग-
हृश्योदयाः ॥ स्खलत्समयकातरीहरण-
जागरूकाः प्रभो करग्रहणदीक्षिताः क
इह ते न दिव्या गुणाः ॥ १० ॥ बिभेति
भवभृत् प्रभो त्वदुपदेशतीव्रौषधात् क-

इध्वरसदुर्विषे बडिशभक्तवत् प्रीयते ॥
अपथ्यपरिहारधीविमुखमित्थमाकस्मिकी
तमप्यवसरे क्रमादवति वत्सला त्वद्दया
॥ ११ ॥ अपार्थ इति निश्चितः प्रहरणा-
दियोगस्तव स्वयं वहसि निर्भयस्त-
दपि रङ्गपृथ्वीपते ॥ स्वरक्षणमिवा-
भवत्प्रणतरक्षणं तावकं यदात्थ परमा-
र्थविन्नियतमन्तरात्मेति ते ॥ १२ ॥
लघिष्ठसुखसंगतैः स्वकृतकर्मनिर्वर्तितैः
कलत्रसुतसोदरानुचरबन्धुसंबन्धिभिः ॥
धनप्रभृतिकैरपि प्रचुरभीतिभेदोत्तरैर्न-
बिभ्रति धृतिं विभो त्वदनुभूतिभोगा-
र्थिनः ॥ १३ ॥ नवक्तुमपि शक्यते
नरकगर्भवासादिकं वपुश्च बहुधातुकं
निपुणचिन्तने तादृशम् ॥ त्रिविष्टपमुखं
तथा तव पदस्य देदीप्यतः किमत्र

न भयास्पदं भवति रङ्गपृथ्वीपते ॥१४॥
भवन्ति मुखभेदतो भयनिदानमेव प्रभो
शुभाशुभविकल्पिता जगति देशकाला-
दयः ॥ इति प्रथितसाध्वसे मयि दयि-
ष्यसे त्वं न चेत् क इत्थमनुकम्पिता
त्वदनुकम्पनीयश्च कः ॥ १५ ॥ सकृत्प्र-
पदनस्पृशामभयदाननित्यव्रती नच द्विर-
भिभाषसे त्वमिति विश्रुतः स्वोक्तितः ॥
यथोक्तकरणां विदुस्तव तु यातुधानादयः
कथं वितथमस्तु तत् कृपणसार्वभौमे
मयि ॥ १६ ॥ अनुत्तरणसमुत्थिते दुरित-
वारिधौ दुस्तरे यदि क्वचन निष्कृतिर्भव-
ति सापि दोषाविला ॥ तदित्थमगतौ
मयि प्रतिविधानमाधीयतां स्वबुद्धिपरि-
कल्पितं किमपि रङ्गधुर्य त्वया ॥ १७ ॥
विषादबहुलादहं विषयवर्गतो दुर्जयाद्वि-

भैमि वृजिनोत्तरस्त्वदनुभूतिविच्छेदतः ॥ मया नियतनाथवानयमिति त्वमर्थापयन् दयाधन जगत्पते दयितरङ्ग संरक्ष माम् ॥ १८ ॥ निसर्गनिरनिष्टता तव निरम्हसः श्रूयते ततस्त्रियुगसृष्टिवद्भवति संहृतिः क्रीडितम् ॥ तथापि शरणागतप्रणायभङ्गभीतो भवान् मदिष्टमिह यद्भवेत्किमपि मास्म तर्ज्जीहपत् ॥ १९ ॥ कयाधुसुतवायसद्विरदपुङ्गवद्रौपदीविभीषणा भुजङ्गमव्रजगणाम्बरीषादयः ॥ भवत्पदसमाश्रिता भयविमुक्तिमापुर्यथा लभेमहि तथा वयं सपदि रङ्गधुर्य त्वया ॥ २० ॥ भयं शमय रङ्गधाम्न्यनितराभिलाषस्पृशां श्रियं बहुलय प्रभो श्रितविपक्षमुन्मूलय ॥ स्वयं समुदितं वपुस्तव निशामयन्तस्सदा वयं त्रिदशनिर्वृतिं

भुवि मुकुन्द विन्देमहि ॥ २१ ॥ श्रियः परिवृढे त्वयि श्रितजनस्य संरक्षके सदद्भुतगुणोदधाविति समर्पितोऽयं भरः ॥ प्रतिक्षणमतः परं प्रथय रङ्गधामादिषु प्रभुत्वमनुपाधिकं प्रथितहेतिभिर्हेतिभिः ॥ २२ ॥ कलिप्रणिधिलक्षणैः कलितशाक्यलोकायतैस्तुरुष्कयवनादिभिर्जगति जृम्भमाणं भयम् ॥ प्रकृष्टनिजशक्तिभिः प्रसभमायुधैः पञ्चभिः क्षितित्रिदशरक्षकैः क्षपय रङ्गनाथ क्षणात् ॥ २३ ॥ दितिप्रभवदेहभिद्दहनसोमसूर्यात्मकं तमः प्रमथनं प्रभो समुदितास्त्रवृन्दं स्वतः ॥ स्ववृत्तिवशवर्तितत्रिदशवृत्तिचक्रं पुनः प्रवर्त्तयतु धाम्नि ते महति धर्मचक्रस्थितिम् ॥ २४ ॥ मनुप्रभृतिमानिते महति रङ्गधामादिके दनुप्रभवदारुणैर्दरमुदीर्यमाणं

परैः ॥ प्रकृष्टगुणकः श्रिया वसुधया च सन्धुक्षितः प्रयुक्तकरुणोदधे प्रशमयस्व शक्त्या स्वयम् ॥ २५ ॥ भुजङ्गमविहङ्गम-प्रवरसैन्यनाथाः प्रभो तथैव कुमुदादयो नगरगोपुरद्वारपाः ॥ अचिन्त्यबलविक्रमा-स्त्वमिव रङ्गसंरक्षका जितं त इति वादिनो जगदनुग्रहे जाग्रति ॥ २६ ॥ विधिस्त्रिपुरमर्दनस्त्रिदशपुङ्गवः पावको यमप्रभृतयोऽपि यद्विमतरक्षणे न क्षमाः ॥ रिरिक्षिषति यत्र च प्रतिभयं न किञ्चित् क्वचित् स नः प्रतिभटान् प्रभो शमय रङ्गधामादिके ॥ २७ ॥ सकैटभतमो-रविर्मधुपरागझञ्झामरुद्धिरण्यगिरिदार-णस्त्रुटितकालनेमिद्रुमः ॥ किमत्र बहुना भजद्भवपयोधिमुष्टिंधयस्त्रिविक्रम भव-त्क्रमः क्षिपतु मंक्षु रङ्गद्विषः ॥ २८ ॥

यतिप्रवरभारतीरसभरेण नीतं वयः प्रफुल्लपलितं शिरः परमिह क्षमं प्रार्थये ॥ निरस्तरिपुसंभवे क्वचन रङ्गमुख्ये विभो परस्परहितैषिणां परिसरेषु मां वर्तय ॥ २९ ॥ प्रबुद्धगुरुवीक्षणप्रथित वेङ्कटेशोद्भवामिमामभयसिद्धये पठत रङ्गभर्तुः स्तुतिम् ॥ भयं त्यजत भद्रमित्यभिदधत्सवः केशवः स्वयं घनघृणानिधिर्गुणगणेन गोपायति ॥ ३० ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु अभीतिस्तवः समाप्तः॥४४

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः ॥

# अथ दयाशतकप्रारम्भः।

श्रीमते रामानुजाय नमः ॥

श्रीमान्वेङ्कटनाथार्यः प्रपद्ये तं गिरिं प्रायः श्रीनिवासानुकम्पया ॥ इक्षुसारस्रव-न्त्येव यन्मूर्त्या शर्करायितम् ॥ १ ॥ विगाहे तीर्थबहुलां शीतलां गुरु-सन्ततिम् ॥ श्रीनिवासदयाम्भोधिपरी-वाहपरम्पराम् ॥ २ ॥ कृतिनः कमला-वासकारुण्यैकान्तिनो भजे ॥ धत्ते यत्सूक्तिरूपेण त्रिवेदी सर्वयोग्यताम् ॥ ३ ॥ पराशरमुखान्वन्दे भगीरथनये स्थितान् ॥ कमलाकान्तकारुण्यगङ्गा-प्लावितमद्विधान् ॥ ४ ॥ अशेषविघ्नश-मनमनीकेश्वरमाश्रये ॥ श्रीमतः करु-णाम्भोधौ शिक्षास्रोत इवोत्थितम्

॥ ५ ॥ समस्तजननीं वन्दे चैतन्यस्तन्यदायिनीम् ॥ श्रेयसीं श्रीनिवासस्यकरुणामिव रूपिणीम् ॥ ६ ॥ वन्दे वृषगिरीशस्य महिषीं विश्वधारिणीम् ॥ तत्कृपाप्रतिघातानां क्षमया वारणं यया ॥ ७ ॥ निशामयतु मां नीला यद्भोगपटलैर्ध्रुवम् ॥ भावितं श्रीनिवासस्य भक्तदोषेष्वदर्शनम् ॥ ८ ॥ कमप्यनवधिं वन्दे करुणावरुणालयम् ॥ वृषशैलतटस्थानां स्वयं व्यक्तिमुपागतम् ॥ ९ ॥ अकिञ्चननिधिं सूतिमपवर्गत्रिवर्गयोः ॥ अञ्जनाद्रीश्वरदयामभिष्टौमि निरञ्जनाम् ॥ १० ॥ अनुचरशक्त्यादिगुणामग्रेसरबोधविरचितालोकाम् ॥ स्वाधीनवृषगिरीशां स्वयंप्रभूतां प्रमाणयामि दयाम् ॥ ११ ॥ अपि निखिललोकसु-

चरितमुष्टिन्धयदुरितमूर्च्छनाजुष्टम् ॥ संजीवयतु दये मामञ्जनगिरिनाथरञ्जनी भवती ॥ १२ ॥ भगवति दये भवत्या वृषगिरिनाथे समाप्लुते तुङ्गे ॥ अप्रतिघमज्जनानां हस्तालम्बो मदागसां मृग्यः ॥ १३ ॥ कृपणाजनकल्पलतिकां कृतापराधस्य निष्क्रियामाद्याम् ॥ वृषगिरिनाथदये त्वां विदन्ति संसारतारणीं विबुधाः ॥ १४ ॥ वृषगिरिगृहमेधिगुणा बोधबलैश्वर्यवीर्यशक्तिमुखाः ॥ दोषा भवेयुरेते यदि नाम दये त्वया विनाभूताः ॥ १५ ॥ आसृष्टिसंततानामपराधानां निरोधिनीं जगतः ॥ पद्मासहायकरुणे प्रतिसंचरकेलिमाचरसि ॥ १६ ॥ अचिदविशिष्टान् प्रलये जन्तूनवलोक्य जातनिर्वेदा ॥ करणकलेवरयोगं वित-

रसि वृषशैलनाथकरुणे त्वम् ॥ १७ ॥
अनुगुणदशार्पितेन श्रीधरकरुणे समा
हितस्नेहा ॥ शमयसि तमः प्रजानां
शास्त्रमयेन स्थिरप्रदीपेन ॥ १८ ॥ रूढा-
वृषाचलपतेः पादे मुखकान्तिपत्रलच्छायां
॥ करुणे सुखयसि विनताङ्कटाक्षवि-
टपैः करापचेयफलैः ॥ १९ ॥ नयने
वृषाचलेन्दोस्तारामैत्रीं दधानया करुणे
॥ दृष्टस्त्वयैव जनिमानपवर्गमकृष्टपच्यम-
नुभवति ॥ २० ॥ समयोपनतैस्तव
प्रवाहैरनुकम्पे कृतसंप्लवा धरित्री ॥
शरणागतसस्यमालिनीयं वृषशैलेशकृ-
षीवलं धिनोति ॥ २१ ॥ कलशोदधि-
सम्पदो भवत्याः करुणे सन्मतिमन्थसं-
स्कृतायाः ॥ अमृतांशमवैमि दिव्यदेहं
मृतसञ्जीवनमञ्जनाचलेन्दोः ॥ २२ ॥

जलधेरिव शीतता दये त्वं वृषशैलाधिपतेः स्वभावभूता ॥ प्रलयारभटीनटीं तदीक्षां प्रसभं ग्राहयसि प्रसन्निलास्यम् ॥ २३ ॥ प्रणतप्रातिकूलमूलघाती प्रतिघः कोऽपि वृषाचलेश्वरस्य ॥ कलमे यवसापचायनीत्या करुणे किंकरतां तवोपयाति ॥ २४ ॥ अबहिष्कृतनिग्रहान् विदन्तः कमलाकान्तगुणान् स्वतंत्रतादीन् ॥ अविकल्पमनुग्रहं दुहानां भवतीमेव दये भजन्ति सन्तः ॥ २५ ॥ कमलानिलयस्त्वया दयालुः करुणे निष्करुणा निरूपणे त्वम् ॥ अत एव हि तावकाश्रितानां दुरितानां भवति त्वदेवभीतिः ॥ २६ ॥ अतिलंघितशासनेष्वभीक्ष्णं वृषशैलाधिपतिर्विजृम्भितोष्मा ॥ पुनरेव दये क्षमानिदानैर्भवतीमाद्रियते भवत्य-

धीनैः ॥ २७ ॥ करुणे दुरितेषु मामकेषु प्रतिकारान्तरदुर्जयेषु खिन्नः ॥ कवचायितया त्वयैव शार्ङ्गी विजयस्थानमुपाश्रितो वृषाद्रिम् ॥ २८ ॥ मयि तिष्ठति दुष्कृतां प्रधाने मितदोषानितरान्विचिन्वती त्वम् ॥ अपराधगणैरपूर्णकुक्षिः कमलाकान्तदये कथं भवित्री ॥ २९ ॥ अहमस्म्यपराधचक्रवर्ती करुणे त्वं च गुणेषु सार्वभौमी ॥ विदुषी स्थितिमीदृशीं स्वयं मां वृषशैलेश्वरपादसात्कुरु त्वम् ॥ ३० ॥ अशिथिलकरणेऽस्मिन्नक्षतश्वासवृत्तौ वपुषि गमनयोग्ये वासमासादयेयम् ॥ वृषगिरिकटकेषु व्यञ्जयत्सु प्रतीतैर्मधुमथनदये त्वां वारिधाराविशेषैः ॥ ३१ ॥ अविदितनिजयोगक्षेममात्मानभिज्ञं गुणलवरहितं मां गोप्तु-

कामा दये त्वम् ॥ परवति चतुरैस्ते विभ्रमैः श्रीनिवासे बहुमतिमनपायां विन्दसि श्रीधरण्योः ॥ ३२ ॥ फलवितरणदक्षं पक्षपातानभिज्ञं प्रगुणमनुविधेयं प्राप्य पद्मासहायम् ॥ महति गुणसमाजे मानपूर्वं दये त्वं प्रतिवदसि यथार्हं पाप्मनां मामकानाम् ॥ ३३ ॥ अनुभवितुमघौघं नालमागामिकालः प्रशमयितुमशेषं निष्क्रियाभिर्न शक्यम् ॥ स्वयमिति हि दये त्वं स्वीकृतश्रीनिवासा शिथिलितभवभीतिः श्रेयसे जायसे नः ॥ ३४ ॥ अवतरणविशेषैरात्मलीलापदेशैरवमतिमनुकम्पे मन्दचित्तेषु विन्दन् ॥ वृषभशिखरिनाथस्त्वन्निदेशेन नूनं भजति शरणभाजां भाविनो जन्मभेदान् ॥ ३५ ॥ परहितमनुकम्पे भावयन्त्यां भवत्यां

स्थितमनुपधि हार्दं श्रीनिवासो दधानः ॥
ललितरुचिषु लक्ष्मीभूमिनीलासु नूनं
प्रथयति बहुमानं त्वत्प्रतिच्छन्दबुद्ध्या
॥ ३६ ॥ वृषगिरिसविधेषु व्याजतो वास-
भाजां दुरितकलुषितानां दूयमाना दये
त्वम् ॥ करणविलयकाले कान्दिशीक-
स्मृतीनां स्मरयसि बहुलीलं माधवं
सावधाना ॥ ३७ ॥ दिशि दिशि गतिवि-
द्भिर्देशिकैर्नीयमाना स्थिरचरमनुकम्पे
स्त्यानलग्ना गुणौस्त्वम् ॥ परिगत वृषशैलं
पारमारोपयन्ती भवजलधिगतानां पोत-
पात्रीभवित्री ॥ ३८ ॥ परिमितफलसङ्ग-
त्प्राणिनः किम्पचाना निगमविपणिमध्ये
नित्यमुक्तानुषक्तम् ॥ प्रसदनमनुकम्पे
प्राप्तवत्या भवत्या वृषगिरिहरिनीलं
व्यञ्जितं निर्विशन्ति ॥ ३९ ॥ त्वयि बहु-

मतिहीनः श्रीनिवासानुकम्पे जगति गतिमिहान्यां देवि सम्मन्यते यः ॥ स खलु विबुधसिन्धौ सन्निकर्षे वहन्त्यां शमयति मृगतृष्णावीचिकाभिः पिपासाम् ॥ ४० ॥ आज्ञां ख्यातिं धनमनुचरानाधिराज्यादिकं वा काले दृष्ट्वा कमलवसतेरप्यकिञ्चित्कराणि ॥ पद्माकान्तं प्रणिहितवतीं पालनेऽनन्यसाध्ये साराभिज्ञा जगति कृतिनः संश्रयन्ते दये त्वाम् ॥ ४१ ॥ प्राजापत्यप्रभृतिविभवं प्रेत्य पर्यायदुःखं जन्माकाङ्क्षन्वृषगिरिवने जग्मुषां तस्थुषां वा ॥ आशासाना कतिचन विभो स्त्वत्परिष्वङ्गधन्यैरङ्गीकारं क्षणमपि दये हार्द्दतुङ्गैरपाङ्गैः ॥ ४२ ॥ नाभीपद्मस्फुरणसुभगा नव्यनीलोत्पलाभाक्रीडाशैलं कमपि करुणे वृण्वती

वेङ्कटाख्यम् ॥ शीता नित्यं प्रसदनवती श्रद्दधानावगाह्या दिव्या काचिज्जयति महती दीर्घिका तावकीना ॥ ४३ ॥ यस्मिन् दृष्टे तदितरसुखैर्गम्यते गोष्पदत्वं सत्यं ज्ञानं त्रिभिरवधिभिर्मुक्तमानन्दसिन्धुम् ॥ त्वत्स्वीकारात्तमिह कृतिनः सूरिवृन्दानुभाव्यं नित्यापूर्वं निधिमिव दये निर्विशन्त्यञ्जनाद्रौ ॥ ४४ ॥ सारं लब्ध्वा कमपि महतः श्रीनिवासाम्बुराशेः काले काले घनरसवती कालिकेवानुकम्पे ॥ व्यक्तोन्मेषामृगपतिगिरौ विश्वमाप्याययन्ती शीलोपज्ञं क्षरति भवती शीतलं सद्गुणौघम् ॥ ४५ ॥ भीमे नित्यं भवजलनिधौ मज्जतां मानवानामालम्बार्थं वृषगिरिपतिस्त्वन्नियोगात्प्रयुङ्क्ते ॥ प्रज्ञासारं प्रकृतिमहता मूल-

भागेन जुष्टं शाखाभेदैः सुभगमनघं शाश्वतं शास्त्रपारीणाम् ॥ ४६ ॥ विद्वत्सेवाकतकनिकषैर्वीतपङ्काशयानां पद्माकान्तः प्रणायति दये दर्पणं ते स्वशास्त्रम् ॥ लीलादक्षां त्वदनवसरे लालयन् विप्रलिप्सां मायाशास्त्राण्यपि शमयितुं त्वत्प्रपन्नप्रतीपान् ॥ ४७ ॥ दैवात्प्राप्ते वृषगिरितटं देहिनि त्वन्निदानात्स्वामिन्पाहीत्यवशवचनं विन्दति स्वापमन्त्यम् ॥ देवः श्रीमान्दिशति करुणे दृष्टिमिच्छं स्त्वदीयामुद्घातेन श्रुतिपरिषदामुत्तरेणाभिमुख्यम् ॥ ४८ ॥ श्रेयस्सूतिं सकृदपि दये सम्मतां यः सखीं ते शीतोदाराम लभत जनः श्रीनिवासस्य दृष्टिम् ॥ देवादीनामयमनृणतां देहवत्त्वेऽपि विन्दन्बन्धान्मुक्तो बलिभिरनघैः पूर्यतेतत्प्र-

युक्तैः ॥ ४९ ॥ दिव्यापाङ्गं दिशसि करुणे येषु सद्देशिकात्मा क्षिप्रं प्राप्ता वृषगिरिपतिं क्षत्रबन्ध्वादयस्ते ॥ विश्वाचार्या विधिशिवमुखाः स्वाधिकारोपरुद्धा मन्ये माता जड इव सुते वत्सला मादृशे त्वम् ॥ ५० ॥ अतिकृपणोऽपि जन्तुरधिगम्य दये भवतीमशिथिलधर्मसेतुपदवीं रुचिरामचिरात् ॥ अमितमहोर्मिजालमतिलङ्घ्य भवाम्बुनिधिं भवति वृषाचलेशपदपत्तननित्यधनी ॥५१॥ अभिमुखभावसंपदभिसंभविनां भविनां क्वचिदुपलक्षिताक्वचिदभङ्गुरगूढगतिः ॥ विमलरसावहा वृषगिरीशदये भवती सपदि सरस्वतीव शमयत्यघमप्रतिघम् ॥ ५२ ॥ अपि करुणे जनस्य तरुणेन्दुविभूषणतामपि कमलासनत्वमपि धाम वृषाद्रि-

पतेः ॥ तरतमतावशेन तनुते ननु ते विततिः परहितवर्ष्मणा परिपचेलिमकेलिमती ॥ ५३ ॥ धृतभुवना दये त्रिविधगत्यनुकूलतरा वृषगिरिनाथपादपरिरम्भवती भवती ॥ अविदित वैभवापि सुरसिन्धुरिवातनुते सकृदवगाहमानमपतापमपापमपि ॥ ५४ ॥ निगमसमाश्रिता निखिललोकसमृद्धिकरी भजदघकूलमुद्वहगतिः परितप्तहिता ॥ प्रकटितहंसमत्स्यकमठाद्यवतारशता विबुधसरिच्छ्रियं वृषगिरीशदये वहसि ॥ ५५ ॥ जगति मितम्पचा त्वदितरा तु दये तरला फलनियमोज्झिता भवति सन्तपनाय पुनः ॥ त्वमिह निरङ्कुशप्रशकनादिविभूतिमती वितरसि देहिनां निरवधिं वृषशैलनिधिम् ॥ ५६ ॥ सकरुणलौकिकप्रभुपरिग्रह-

निग्रहयोर्निर्यातिमुपाधिचक्रपरिवृत्तिपरम्प-
रया॥ वृषभमहीधरेशकरुणे वितरङ्गन्यतां
श्रुतिमितसम्पदि त्वयि कथं भविता वि-
शयः ॥ ५७ ॥ वृषगिरिकृष्णमेघजनितां
जनितापहरां त्वदभिमतिं सुवृष्टिमुपजी-
व्यनिवृत्ततृषः ॥ बहुषु जलाशयेषु बहु-
मानमपोह्य दये न जहति सत्पथं जगति
चातकवत्कृतिनः ॥ ५८ ॥ त्वदुदयतूलि-
काभिरमुना वृषशैलजुषा स्थिरतरशिल्प-
नैव परिकल्पितचित्रधियः॥यतिपतियामु-
नप्रभृतयः प्रथयन्ति दये जगति हितन्न
नस्त्वयि भरन्यसनादधिकम् ॥ ५९ ॥
मृदुहृदये दये मृदितकामहिते महिते
धृतविबुधे बुधेषु विततात्मधुरे मधुरे ॥
वृषगिरिसार्वभौमदयिते मयि ते महतीं
भुवनिधे निधेहि भवमूलहरां लहरीम्

॥ ६० ॥ अकूपारैरेकोदकसमयवैतण्डिकजवैरनिर्वाप्यां क्षिप्रं क्षपयितुमविद्यारण्यवडवाम् ॥ कृपे त्वं तत्तादृक्प्रथिमवृषपृथ्वीधरपतिस्वरूपद्वैगुण्यद्विगुणनिजबिन्दुः प्रभवसि ॥ ६१ ॥ विवित्सावेतालीविगमपरिशुद्धेऽपि हृदये पटुप्रत्याहारप्रभृतिपुटपाकप्रचकिताः ॥ नमन्तस्त्वां नारायणशिखरिकूटस्थकरुणे निरुद्धत्वद्द्रोहा नृपतिसुतनीतिं न जहति ॥ ६२ ॥ अनन्याधीनः सन् भवति परतन्त्रः प्रणमतां कृपे सर्वद्रष्टा न गणयति तेषामपकृतिम् ॥ पतिस्त्वत्पारार्थ्यं प्रथयति वृषक्ष्माधरपतिर्व्यवस्थां वैयात्यादिति विघटयन्ती विहरसि ॥ ६३ ॥ अपां पत्युः शत्रूनसहनमुनेर्धर्मनिगडं कृपे काकस्यैकं हितमिति हिनस्ति स्म

न्नयनम् ॥ वित्तिनिस्स्वातन्त्र्यो वृषगिरिपतिस्त्वद्विहृतिभिर्दिशत्येवं देवो जनितसुगतिं दण्डनविधिम् ॥ ६४ ॥ निषादानां नेता कपिकुलपतिः कापि शबरी कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति ॥ अमीषां निम्नत्वं वृषगिरिपतेरुन्नतिमपि प्रभूतैः स्रोतोभिः प्रसभमनुकम्पे शमयसि ॥ ६५ ॥ त्वया दृष्टस्तुष्टिं भजति परमेष्ठी निजपदे वहन्मूर्तीरष्टौ विहरति मृडानीपरिवृढः ॥ बिभर्ति स्वाराज्यं वृषशिखरिशृङ्गारिकरुणे सुनासीरो देवासुर समरनासीरसुभटः ॥ ६६ ॥ दये दुग्धोदन्वद्व्यतियुतसुधासिन्धुनयतस्त्वदाश्लेषान्नित्यं जनितमृतसंजीवनदशाः ॥ स्वदन्ते दान्तेभ्यः श्रुतिवदनकर्पूरगुलिकाविवृण्वन्तश्चित्तं वृषशिखरिविश्वम्भरगुणाः॥६७॥

जगज्जन्मस्थेमप्रलयरचनाकेलिरसिको विमुक्त्येकद्वारं विघटितकपाटं प्रणयिनाम् ॥ इति त्वय्यायत्तं द्वितयमुपधीकृत्य करुणे विशुद्धानां वाचां वृषशिखरिनाथस्तुतिपदम् ॥ ६८ ॥ कलिक्षोभोन्मीलत्क्षितिकलुषकूलंकषजवैरनुच्छेदैरेतैरवटतटवैषम्यरहितैः ॥ प्रवाहैस्ते पद्मासहचरपरिष्कारिणि कृपे विकल्पन्तेऽनल्पा वृषशिखरिणो निर्झरगुणाः ॥ ६९ ॥ खिलं चेतोवृत्तेः किमिदमिति विस्मेरभुवनं कृपे सिंहक्ष्माभृत्कृतमुखचमत्कारकरणम् ॥ भरन्यासच्छन्नप्रबलवृजिनप्राभृतभृतां प्रतिप्रस्थानं ते श्रुतिनगरशृङ्गाटकजुषः ॥ ७० ॥ त्रिविधचिदचित्सत्तास्थेमप्रवृत्तिनियामिका वृषगिरिविभोरिच्छा सा त्वं परैरपराहता ॥ कृप-

णाभरभृत्किंकुर्वाणप्रभूतगुणान्तरा वहसि करुणे वैचक्षण्यं मदीक्षणसाहसे ॥ ७१ ॥ वृषगिरिपतेर्हृद्या विश्वावतारसहायिनी क्षपितनिखिलावद्या देवि क्षमादिनिषेविता ॥ भुवनजननी पुंसां भोगापवर्गविधायिनी वितमसि पदे व्यक्तिं नित्यां बिभर्षि दये स्वयम् ॥७२॥ स्वयमुदयिनः सिद्धाद्याविष्कृताश्च शुभाश्रया विविधविभवव्यूहावासाः परं च पदं विभोः ॥ वृषगिरिमुखेष्वेतेष्विच्छावधिप्रतिलब्धये दृढविनिहिता निःश्रेणिस्त्वं दये निजपर्वभिः ॥ ७३ ॥ हितमितिजगद्दृष्ट्या क्लृप्तैरक्लृप्तफलान्तरैरमतिविहितैरन्यैर्धर्मायितैश्च यदृच्छया ॥ परिगणितबहुच्छद्मापद्मासहायदये स्वयं प्रदिशसि निजाभिप्रेतं नः प्रशाम्यदपत्रपा

॥ ७४ ॥ अतिविधिशिवैश्वर्यात्माऽनुभूतिरसैर्जनानहृदयमिहोपच्छन्द्यैषामसङ्गदशार्थिनी ॥ तृषितजनतातीर्थस्नानक्रमक्षपितैनसां वितरसि दये वीतातङ्कां वृषाद्रिपतेः पदम् ॥ ७५ ॥ वृषगिरिसुधासिन्धौ जन्तुर्दये निहितस्त्वया भवभयपरीतापच्छित्त्यै भजन्नघमर्षणम् ॥ मुषितकलुषो मुक्तेरग्रेसरैरभिपूर्यते स्वयमुपनतैः स्वात्मानन्दप्रभृत्यनुबन्धिभिः ॥७६॥ अनितरजुषामन्तर्मूलेऽप्यपायपरिप्लवे कृतविदनघाविच्छिद्यैषां कृपेयमवश्यताम् । प्रपदनफलप्रत्यादेशप्रसङ्गविवर्जितं प्रतिविधिमुपादित्से सार्धं वृषाद्रिहितैषिणा ॥ ७७ ॥ त्वणाविलयिनां शास्त्रार्थानां फलाय निवेशिते पितृसुरगणे निर्वेशात्प्रागपि प्रलयं गते ॥ अधिगतवृषक्ष्मा-

भूम्नाथामकालवशंवदां प्रतिभुवमिह व्याचख्युस्त्वां कृपे निरुपप्लवाम् ॥ ७८ ॥ त्वदुपसदनादद्य श्वो वा महाप्रलयेऽपि वा वितरति निजं पादाम्भोजं वृषाचलशेखरः ॥ तदिह करुणे तत्तत्क्रीडातरङ्गपरम्परातरतमतया जुष्टाधास्ते दुरत्ययतां विदुः ॥ ७९ ॥ प्रणिहितधियां त्वत्संपृक्ते वृषाद्रिशिखामणौ प्रसृमरसुधाधाराकारा प्रसीदति भावना ॥ दृढमिति दये दत्तास्वादं विमुक्तिवलाहकं निभृतगरुतो निध्यायन्ति स्थिराशयचातकाः ॥ ८० ॥ कृपे विगतवेलया कृतसमग्रपोषैस्त्वया कलिज्वलनदुर्गते जगति कालमेघायितम् ॥ वृपाक्षितिधरादिषु स्थितिपदेषु सानुप्लवैर्वृषाद्रिपतिविग्रहैर्व्यपगताखिलावग्रहैः ॥ ८१ ॥ प्रसूय विविधं जग-

त्तदभिवृद्धये त्वं दये समीक्षणविचिन्त-
नप्रभृतिभिः स्वयं तादृशैः ॥ विचित्रगुण-
चित्रितां विविधदोषवैदेशिकीं वृषाचल-
पतेस्तनुं विशसि मत्स्यकूर्मादिकाम्
॥ ८२ ॥ युगान्तसमयोचितं भजति
योगनिद्रारसं वृषक्षितिभृदीश्वरे विहरण
क्रमाज्जाग्रति । उदीर्णचतुरर्णवीकदन-
वेदिनीं मेदिनीं समुद्धृतवती दये तदभि-
जुष्टया दंष्ट्रया । ८३ ॥ सटापटलभी-
षणे सरभसाट्टहासोद्भटे स्फुरत्क्रुधिपरि-
स्फुरद्भ्रुकुटिकेऽपि वक्त्रे कृते । दये
वृषगिरीशितुर्दनुजडिम्भदत्तस्तना सरोज-
सदृशा दृशासमुदिताकृतिर्दृश्यसे ॥ ८४ ॥
प्रसक्तमधुना विधिप्रणिहितैस्सपर्यादिकैः
समस्तदुरितच्छिदा निगमगन्धिना त्वं
दये ॥ अशेषमविशेषतस्त्रिजगदञ्जनाद्री-

शितुश्चराचरमचीकरश्चरणपङ्कजेनाङ्कित-
म् ॥ ८५ ॥ परश्वधतपोधनप्रथनसत्क्रतू-
पाकृतक्षितीश्वरपशुक्षरत्क्षतजकुङ्कुम-
स्थासकैः ॥ कृपाचलदयालुना ननु विह-
र्तुमालिप्यथा निधाय हृदये दये निहित-
रक्षितानां हितम् ॥ ८६ ॥ कृपे कृतजग-
द्धिते कृपणजन्तुचिन्तामणो रमासहचरं-
क्षितौ रघुधुरीणयन्त्या त्वया ॥ व्यभ-
ज्यत सरित्पतिः सकृदवेक्षणात्तत्क्षणा-
त्प्रकृष्टबहुपातकप्रशमहेतुना सेतुना
॥ ८७ ॥ कृपे परवतस्त्वया वृष-
गिरीशितुः क्रीडितं जगद्धितमशेषतस्तदि-
दमित्यनर्घ्यप्यते॥ मदच्छलपरिच्युतप्रण-
तदुष्कृतप्रेक्षितैर्हतप्रबलदानवैर्मलधरस्य
हेलाशनैः ॥ ८८ ॥ प्रभूतविबुधद्विपद्भर-
णखिन्नविश्वम्भराभरापनयनच्छलात्त्वम-

वतार्य लक्ष्मीधरम् ॥ निराकृतवती दये निगमसौधदीपश्रिया विपश्चिदविगीतया जगति गीतयान्धं तमः ॥ ८९ ॥ वृषाद्रिहयसादिनः प्रबलदोर्भरत्प्रेङ्खितस्त्विषा स्फुटतटिद्गुणास्त्वदवसेकसंस्कारवान् ॥ करिष्यति दये कलिप्रबलघर्मनिर्मूलनः पुनः कृतयुगाङ्कुरं भुवि कृपाणधाराधरः ॥ ९० ॥ विश्वोपकारमिति नाम सदा दुहानामद्यापि देवि भवतीमवधीरयन्तम् ॥ नाथे निवेशय वृषाद्रिपतौ दये त्वं न्यस्तस्वरक्षणभरं त्वयि मां त्वयैव ॥ ९१ ॥ नैसर्गिकेण तरसा करुणे नियुक्ता निम्नेतरेऽपि मयि ते विततिर्यदि स्यात् ॥ विस्मापयेद्वृषगिरीश्वरमप्यवार्या वेलातिलङ्घनदशेव महाम्बुराशेः ॥ ९२ ॥ विज्ञातशासनगतिर्वि-

परीतवृत्त्या वृत्रादिभिः परिचितां पदवीं भजामि ॥ एवंविधे वृषगिरीशदये मयि त्वं दीने विभोः शमय दण्डधरत्वलीलाम् ॥ ६३ ॥ मा साहसोक्तिघनकञ्चुकवञ्चितान्धः पश्यत्सु तेषु विदधाम्यतिसाहसानि ॥ पद्मासहायकरुणे न रुणत्सि किं त्वं घोरं कुलिङ्गशकुनेरिव चेष्टितं मे ॥ ६४ ॥ विक्षेपमर्हसि दये विपलायितेऽपि व्याजं विभाव्य वृषशैलपतेर्विहारम् ॥ स्वाधीनसत्वसरणिः स्वयमत्र जन्तौ द्राघीयसी दृढतरा गुणवागुरा त्वम् ॥ ६५ ॥ सन्तन्यमानमपराधगणं विचिन्त्य त्रस्यामि हन्त भवतीं च विभावयामि ॥ अह्नाय मे वृषगिरीश दये जहीमामाशीविषग्रहणकेलिनिभामवस्थाम् ॥ ६६ ॥ औत्सुक्यपूर्वमुपह्नत्य

महापराधान्मातः प्रसादयितुमिच्छति मे मनस्त्वाम् ॥ आलिह्यतान् निरवशेषमलब्धतृप्तिस्ताम्यस्यहो वृषगिरीशधृता दये त्वम् ॥ ९७ ॥ जह्याद्वृषाचलपतिः प्रतिघेऽपि न त्वां घर्मोपतप्त इव शीतलतामुदन्वान् ॥ सा मामरुंतुदमरन्यसनानुवृत्तिस्तद्वीक्षणैः स्पृश दये तव केलिपद्मैः ॥ ९८ ॥ दृष्टेऽपि दुर्बलधियं दमनेऽपि दृप्तं स्नात्वापि धूलिरसिकं भजनेऽपि भीमम् ॥ बध्वा गृहाण वृषशैलपतेर्दये मां त्वद्वारणं स्वयमनुग्रहशृङ्खलाभिः ॥ ९९ ॥ नातः परं किमपि मे त्वयि नाथनीयं मातर्दये मयि कुरुष्व तथा प्रसादम् ॥ बद्धादरो वृषगिरिप्रणयी यथासौ मुक्तानुभूतिमिह दास्यति मे मुकुन्दः ॥ १०० ॥ निस्सीमवैभवजुषां-

सिषतां गुणानां स्तोतुर्दये वृषगिरीश गुणेश्वरीं त्वां ॥ तैरेव नूनमवशैरभिनन्दितं मे सत्यापि तं तव बलादकुतोभयत्वम् ॥ १०१ ॥ अद्यापि तद्वृषगिरीशदये भवत्यामारम्भमात्रमनिदं प्रथमस्तुतीनाम् ॥ संदर्शितस्वपरनिर्वहणासहेथा मन्दस्य साहसमिदं त्वयि वन्दिनो मे ॥ १०२ ॥ प्रायो दये त्वदनुभावमहाम्बुराशौ प्राचेतसप्रभृतयोऽपि परन्तटस्थाः ॥ तत्रावतीर्णमतलस्पृशमाप्लुतं मां पद्मापतेः प्रहसनोचितमाद्रियेथाः ॥ १०३ ॥ वेदान्तदेशिकपदे विनिवेश्य बालं देवो दयाशतकमेतदवादयन्माम् ॥ वैहारिकेण विधिना समये गृहीतं वीणाविशेषमिव वेङ्कटशैलनाथः ॥ १०४ ॥ अनवधिमधिकृत्य श्रीनिवासानुकम्पा-

मवितथविषयत्वाद्विश्वमव्रीडयन्ती ॥ विविधकुशलनीवी वेङ्कटेशप्रसूता स्तुतिरियमनवद्या शोभते सत्त्वभाजाम् ॥ १०५ ॥ शतकमिदमुदारं सम्यगभ्यस्यमानान्वृषगिरिमधिरुह्य व्यक्तमालोकयन्ती ॥ अनितरशरणानामाधिराज्येऽभिषिञ्चेच्छमितविमतपक्षा शार्ङ्गधन्वानुकम्पा ॥ १०६ ॥ विश्वानुग्रहमातरं व्यतिषजत्स्वर्गापवर्गांसुधासध्रीचीमिव वेङ्कटेश्वरकविर्भक्त्यादयामस्तुत ॥ पद्यानामिह यद्विधेयभगवत्संकल्पकल्पद्रुमात् झञ्झामारुतधूतचूतनयतः सांपातिकोऽयं क्रमः ॥ १०७ ॥ कामं सन्तु मिथःकरम्बितगुणावद्यानि पद्यानि नः कस्यास्मिन् शतके सदम्बुकतके दोषश्रुतिं द्रास्यति ॥ निष्प्रत्यूहवृषाद्रिनिर्झरझरत्कारच्छले-

नोज्ज्वलदीनालम्बनदिव्यदंपतिदयाकल्लोलकोलाहलः ॥ १०८ ॥ इति कविताकिंकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्री मद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु दयाशतकं सम्पूर्णम् ॥ ४२ ॥ श्रीरस्तु॥

# अथ श्री जितंतेस्तोत्रम्

श्रीमते रामानुजाय नमः ॥ जितं ते पुण्डरीकाक्ष पूर्णषाड्गुण्यविग्रह ॥ परानन्द परब्रह्म नमस्ते चतुरात्मने ॥ १ ॥ नमस्ते पीतवसन नमः कटकधारिणे ॥ नमो नीलालकाबद्धवेणीसुन्दर पुङ्गव ॥ २ ॥ स्फुरद्वलयकेयूरनूपुराङ्गदभूषणैः ॥ शोभनैर्भूषिताकार

कल्याणगुणराशये ॥ ३ ॥ करुणापूर्ण-हृदय शंखचक्रगदाधर ॥ अमृतानन्दपूर्णा-भ्यां लोचनाभ्यां विलोकय ॥ ४ ॥ कृशं कृतघ्नं दुष्कर्मकारिणं पापभाज-नम् ॥ अपराधसहस्राणामाकरं करुणा-कर ॥ ५ ॥ कृपया मां केवलया गृहाण मथुराधिप ॥ विषयार्णवमग्नं मामुद्धर्तुं त्वमिहार्हसि ॥ ६ ॥ पिता माता सुहृद्ब-न्धुर्भ्राता पुत्रस्त्वमेव मे ॥ विद्या धनं च कामश्च नान्यत्किञ्चित्त्वया विना ॥ ७ ॥ यत्र कुत्र कुले वासो येषु केषु भवो-ऽस्तु मे ॥ तव दास्यैकभावे स्यात्सदा सर्वत्र मे रतिः ॥ ८ ॥ मनसा कर्मणा वाचा शिरसा वा कथंचन ॥ त्वां विना नान्यमुद्दिश्य करिष्ये किञ्चिदप्यहम् ॥ ९ ॥ पाहि पाहि जगन्नाथ कृपया

भक्तवत्सल । अनाथोऽहमधन्योऽहमकृ-
तार्थो ह्यकिञ्चनः ॥ १० ॥ नृशंसः पाप-
कृत् क्रूरो वञ्चको निष्ठुरः सदा ॥ भवा-
र्णवनिमग्नं मामनन्यकरुणोदधे ॥११॥
करुणापूर्णदृष्टिभ्यां दीनं मामवलोकय ॥
त्वदग्रे पतितं त्यक्तुं तावकं नार्हसि प्रभो!
॥ १२ ॥ मया कृतानि पापानि त्रिवि-
धानि पुनः पुनः ॥ त्वत्पादपङ्कजं प्राप्तुं
नान्यस्त्वत्करुणां विना ॥ १३ ॥ सा-
धनानि प्रसिद्धानि यागादीन्यञ्जलो-
चन ॥ त्वदाज्ञया प्रयुक्तानि त्वामुद्दिश्य
कृतानि वै ॥ १४ ॥ भक्तान्यैकलभ्यः
पुरुषोत्तमो हि जगत्प्रसूतिस्थितिनाश-
हेतुः ॥ अकिञ्चनं नान्यगतिं शरण्य
गृहाण मां क्लेशिनमम्बुजाक्ष ॥ १५ ॥
धर्मार्थकाममोक्षेषु नेच्छा मम कदाचन ॥

त्वत्पादपङ्कजं साधोर्जीवितं दीयतां मम ॥ १६ ॥ कामये तावकत्वेन परिचर्यासु वर्तनम् ॥ नित्यं किङ्करभावेन परिगृह्णीष्व मां विभो ॥ १७ ॥ लोकं वैकुण्ठनामानं दिव्यं षाड्गुण्यसंयुतम् ॥ अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ॥ १८ ॥ नित्यसिद्धैः समाकीर्णं त्वन्मयैः पाञ्चकालिकैः ॥ सभाप्रासादसंयुक्तं वनैश्चोपवनैः शुभैः ॥ १९ ॥ वापीकूपतटाकैश्च वृक्षषण्डैः सुमण्डितम् ॥ अप्राकृतं सुरैर्वन्द्यमयुतार्कसमप्रभम् ॥ २० ॥ प्रकृष्टसत्त्वराशिं त्वां कदा द्रक्ष्यामि चक्षुषा ॥ क्रीडन्तं रमया सार्द्धं लीलाभूमिषु केशवम् ॥ २१ ॥ मेघश्यामं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ॥ उन्नसं चारुदशनं बिम्बोष्ठं च शुभाननम्

॥ २२ ॥ विशालवक्षसं श्रीशंकम्बुग्रीवं जगद्गुरुम् ॥ आजानुबाहुपरिघमुन्नतांसं मधुद्विषम् ॥ २३ ॥ तनूदरं निम्ननाभि-मापीनजघनं हरिम् ॥ करभोरुश्रियः कान्तं कदा द्रक्ष्यामि चक्षुषा ॥ २४ ॥ शंखचक्रगदापद्मैरङ्कितं पादपङ्कजम् ॥ शरच्चन्द्रशताकान्तं नखराजिविराजितम् ॥ २५ ॥ सुरासुरैर्वन्द्यमानमृषिभिर्वि-दितं सदा ॥ मूर्द्धानं मामकं देव तावकं मण्डयिष्यति ॥ २६ ॥ कदा गम्भीरया वाचा श्रिया युक्तो जगत्पते ॥ चामरव्य-ग्रहस्तं मामेवं कुर्विति वक्ष्यसि ॥ २७ ॥ कदाहं राजराजेन गणनाथेन नोदितः ॥ चरेयं भगवत्पादपरिचर्यानुवृत्तिषु ॥२८॥ शान्ताय सुविशुद्धाय तेजसे परमात्मने ॥ नमः सर्वगुणातीतषाड्गुण्यायापातिवेधसे ॥

॥ २९ ॥ सत्यज्ञानानन्तगुणब्रह्मणे चतुरात्मने ॥ चतुःपञ्चनवव्यूहदशद्वादशमूर्त्तये ॥ ३० ॥ नमोऽनन्ताय विश्वाय विश्वातीताय चक्रिणे ॥ नमस्ते पञ्चकालज्ञ पञ्चकालपरायण ॥ ३१ ॥ पञ्चकालैकमनसां त्वमेव गतिरव्ययः ॥ स्वमहिम्नि स्थितं देवं निर्विकारं निरञ्जनम् ॥ ३२ ॥ अप्रमेयमजं विष्णुं शरणं त्वां गतोऽस्म्यहम् ॥ गुणातीतं परं शान्तमब्जनाभं सुरेश्वरम् ॥ ३३ ॥ तुरीयाद्यतिरिक्तं त्वां कौस्तुभोद्भासिवक्षसम् ॥ विश्वरूपं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ॥ ३४ ॥ मोक्षं सालोक्यसारूप्यं प्रार्थये न धराधर ॥ इच्छामि हि महाभाग सायुज्यं तव सुव्रत ॥ ३५ ॥ सकलाचरणातीत किंकरो-

ऽस्मि तवानघ ॥ पुनः पुनः किंकरोऽस्मि तवाहं पुरुषोत्तम ॥ ३६ ॥ आसनाद्य-नुयागान्तमर्चनं यन्मया कृतम् ॥ भोग-हीनं क्रियाहीनं मन्त्रहीनमभक्तिकम् ॥ ३७ ॥ तत्सर्वं क्षम्यतां देव दीनं मामा-त्मसात्कुरु ॥ इति स्तोत्रेण देवेशं स्तुत्वा मधुविघातिनम् ॥ ३८ ॥ यागावसान-समये देवदेवस्य चक्रिणः ॥ नित्यं किङ्क-रभावेन स्वात्मानं विनिवेदयेत् ॥ ३९ ॥ इति श्रीपञ्चरात्रागमे जितंतेस्तोत्रे प्रथमोऽध्यायः ॥ १ ॥ जितं ते पुण्ड-रीकाक्ष नमस्ते विश्वभावन ॥ नमस्ते-ऽस्तु हृषीकेश महापुरुषपूर्वज ॥ १ ॥ विज्ञापनामिदं देव शृणुष्व पुरुषोत्तम ॥ नरनारायणाभ्यां च श्वेतद्वीपनिवासिभिः ॥ २ ॥ नारदाद्यैर्मुनिगणैः सनकाद्यैश्च

योगिभिः ॥ ब्रह्मेशाद्यैः सुरगणैः पञ्च-
कालपरायणैः ॥ ३ ॥ पूज्यसे पुण्डरी-
काक्ष दिव्यैर्मन्त्रैर्महात्मभिः ॥ पाषण्डि-
धर्मसङ्कीर्णे भगवद्भक्तिवर्जित ॥ ४ ॥
कलौ जातोऽस्मि देवेश सर्वधर्मबहि-
ष्कृते ॥ कथं त्वामसमाचारः पापप्रसव-
भूरहम् ॥ ५ ॥ अर्चयामि दयासिन्धो
पाहि मां शरणागतम् ॥ तापत्रयदवाग्नौ
च दह्यमानं सदा विभो ॥ ६ ॥ पाहि मां
पुण्डरीकाक्ष केवलं कृपया तव ॥ जन्म-
मृत्युजराव्याधिदुःखसन्तप्तदेहिनम् ॥ पा-
लयाशु दृशा देव तव कारुण्यगर्भया ॥७॥
इन्द्रियाणि मया जेतुमशक्यं पुरुषोत्तम ॥
शरीरं मम देवेश व्याधिभिः परिपीडितम्
॥ ८ ॥ मनो मे पुण्डरीकाक्ष विषयानेव

धावति ॥ वाणी मम हृषीकेश मिथ्या-पारुष्यदूषिता ॥ ९ ॥ एवं साधनहीनोऽहं किङ्करिष्यामि केशव ॥ रक्ष मां कृपया कृष्ण भवाब्धौ पतितं सदा ॥ १० ॥ अपराधसहस्राणां सहस्रमयुतं तथा ॥ अर्बुदं चाप्यसङ्ख्येयं करुणाब्धे क्षमस्व मे ॥ ११ ॥ यच्चापराधं कृतवानज्ञानात्पुरुषोत्तम ॥ अज्ञस्य मम देवेश तत्सर्वं क्षन्तुमर्हसि ॥ १२ ॥ अज्ञत्वादल्पशक्तित्वाद्बालत्वाद्दुष्टभावनात् । कृतापराधकृपणं क्षन्तुमर्हसि मां विभो ॥ १३ ॥ अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ॥ तानि सर्वाणि मे देव क्षमस्व मधुसूदन ॥ १४ ॥ यज्जन्मनः प्रभृति मोहवशात्कृतेन नानापराध-

शतमाचरितं मया ते ॥ अन्तर्बहिश्च स-
कलं तव पश्यतोऽपि क्षन्तुं त्वमर्हसि
हरे करुणावशेन ॥ १५ ॥ कर्मणा मन-
सा वाचा या चेष्टा मम नित्यशः ॥ केशा-
वाराधने सा स्याज्जन्मजन्मान्तरेष्वपि
॥ १६ ॥ इति श्रीपञ्चरात्रागमे जितन्ते-
स्तोत्रे द्वितीयोऽध्यायः ॥ २ ॥ जितं ते
पुण्डरीकाक्ष नमस्ते विश्वभावन ॥ नम-
स्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥ १ ॥
नमस्ते वासुदेवाय शान्तानन्दचिदात्मने
॥ अध्यक्षाय स्वतन्त्राय निरपेक्षाय शा-
श्वते ॥ २ ॥ अच्युतायाविकाराय तेजसां
निधये नमः ॥ क्लेशकर्माद्यसंस्पृष्टपूर्ण-
षाड्गुण्यमूर्त्तये ॥ ३ ॥ त्रिभिर्ज्ञानबलैश्व-
र्यवीर्यशक्त्योजसा युगैः ॥ त्रियुगाय नम-

स्तेऽस्तु नमस्ते चतुरात्मने ॥ ४ ॥ प्रधान-
पुरुषेशाय नमस्ते पुरुषोत्तम ॥ चतुःपञ्च-
नवव्यूहदशद्वादशमूर्त्तये ॥ ५ ॥ अनेक मू-
र्त्तये तुभ्यममूर्त्तायैकमूर्त्तये ॥ नारायण न-
मस्तेऽस्तु पुण्डरीकायतेक्षण ॥ ६ ॥ सु-
भ्रूललाटसुनस सुस्मिताधरविद्रुम ॥ पी-
नवृत्तायतभुज श्रीवत्सकृतभूषण ॥ ७ ॥
तनुमध्यमहावक्षः पद्मनाभ नमोऽस्तु ते
॥ त्रिविक्रमविक्रमाक्रान्तत्रैलोक्यचरणा-
म्बुज ॥ ८ ॥ नमस्ते पीतवसन स्फुरन्म-
करकुण्डल ॥ स्फुरत्किरीटकेयूरहारकौ-
स्तुभभूषण ॥ ९ ॥ पञ्चायुध नमस्तेऽस्तु
नमस्ते पञ्चकालिक ॥ पञ्चकालाय ते
कान्तयोगक्षेमावह प्रभो ॥ १० ॥ नित्य-
ज्ञानबलैश्वर्यभोगोपकरणाच्युत ॥ नम-

स्ते ब्रह्मरुद्रादिलोकयात्राप्रवर्तक ॥ ११ ॥
जन्मप्रभृति दासोऽस्मि शिष्योऽस्मि
तनयोऽस्मि ते ॥ त्वं च स्वामी गुरुर्माता
पिता च मम माधव ॥ १२ ॥ अयि त्वां
भगवन् ब्रह्माशिवशक्रमहर्षयः ॥ द्रष्टुं
यष्टुमभिष्टोतुमद्यापीश नहीशिरे ॥ १३ ॥
तापत्रयमहाग्राहभीषणे भवसागरे ॥
मज्जतां नाथ नौरेषा प्रणतिस्तु त्वद-
र्पिता ॥ १४ ॥ अनाथाय जगन्नाथ
शरण्यशरणार्थिने ॥ प्रसीद सीदते मह्यं
मुह्यते भक्तवत्सल ॥ १५ ॥ मन्त्रहीनं
क्रियाहीनं भक्तिहीनं यदर्चितम् ॥ तत्
क्षन्तव्यं प्रपन्नानामपराधसहो ह्यसि
॥ १६ ॥ सर्वेषु देशकालेषु सर्वावस्थासु
चाच्युत ॥ किङ्करोऽस्मि हृषीकेश भूयो
भूयोऽस्मि किङ्करः ॥ १७ ॥ एकत्रि-

चतुरत्यन्तचेष्टज्येष्ठाकृतिस्थिते ॥ व्यक्त-पाड्गुण्यचेष्टाय चतुरात्मात्मने नमः ॥ १८ ॥ इति श्री पञ्चरात्रागमे जितंते-स्तोत्रे तृतीयोऽध्यायः ॥ ३ ॥ जितं ते पुण्डरीकाक्ष पूर्णषाड्गुण्य विग्रह ॥ नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥१॥ देवानां दानवानां च सामान्यमधिदैवतम् ॥ सर्वदा चरणा द्वन्द्वं व्रजामि शरणां तव ॥ २ ॥ एकस्त्वमस्य लोकस्य स्रष्टा संहारकस्तथा ॥ अध्यक्षश्चानुमन्ता च गुणमायासमावृतः ॥ ३ ॥ संसारसागरं घोरमनन्तक्लेशभाजनम् ॥ त्वामेव शरणां प्राप्य निस्तरन्ति मनीषिणः ॥ ४ ॥ न ते रूपं न चाकारो नायुधानि न चास्पदम् ॥ तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥ ५ ॥ नैव किंचित् परोक्षं

ते प्रत्यक्षोऽसि न कस्यचित् ॥ नैव किंचिदसाध्यं ते न चासिद्धोऽसि कर्हिचित् ॥ ६ ॥ कार्य्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ॥ योगिनां परमां सिद्धिं परमं ते पदं विदुः ॥ ७ ॥ अहं भीतोऽस्मि देवेश संसारेऽस्मिन् भयावहे ॥ पाहि मां पुण्डरीकाक्ष न जाने शरणं परम् ॥ ८ ॥ कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ॥ शरीरे च गतौ चास्य वर्तते मे महद्भयम् ॥ ६ ॥ त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि ॥ निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥ १० ॥ विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमूर्जितम् ॥ जन्मान्तरेऽपि देवेश माभूदस्य परिक्षयः ॥ ११ ॥ दुर्गतावपि जातायां त्वद्गतो मे मनोरथः ॥ यदि नाशं न विन्देत ताव-

नास्मि कृती सदा ॥ १२ ॥ न कामक-
लुषं चित्तं मम ते पादयोः स्थितम् ॥ का-
मये वैष्णवत्वं च सर्वजन्मसु केवलम्
॥ १३ ॥ अज्ञानाद्यदि वा ज्ञानादशुभं
यत् कृतं मया ॥ क्षन्तुमर्हसि देवेश दा-
स्येन च गृहाण माम् ॥ १४ ॥ सर्वेषु देश-
कालेषु सर्वावस्थासु चाच्युत । किङ्क-
रोऽस्मि हृषीकेश भूयो भूयोऽस्मि किङ्करः
॥ १५ ॥ इत्येवमनया स्तुत्या स्तुत्वा देवं
दिनेदिने ॥ किंकरोऽस्मीति चात्मानं
देवाय विनिवेदयेत् ॥ १६ ॥ यच्चापराधं
कृतवानज्ञानात्पुरुषोत्तम ॥ अज्ञस्य मम
देवेश तत्सर्वं क्षन्तुमर्हसि ॥ १७ ॥ अहं-
कारार्थकामेषु प्रीतिरद्यैव नश्यतु ॥ त्वां
प्रपन्नस्य मे नित्यं वर्द्धतां प्रीतिः त्वयि
॥ १८ ॥ कामसत्यन्तदुर्बुद्धिः क नु चात्म-

हितेच्छताम् ॥ यद्धितं मम देवेश तदाज्ञापय माधव ॥ १९ ॥ सोऽहं ते देवदेवेश नार्चनादौ स्तुतौ न च ॥ सामर्थ्यवान् कृपामात्रमनोवृत्तिः प्रसीद मे ॥ २० ॥ उपचारापदेशेन क्रियतेऽहर्निशं मया ॥ अपचारानिमान् सर्वान्क्षमस्व पुरुषोत्तम ॥ २१ ॥ न जाने कर्म यत् किंचिन्नापि लौकिकवैदिकौ ॥ न निषेधविधी विष्णो तव दासोऽस्मि केवलम् ॥ २२ ॥ स त्वं प्रसीद भगवन् कुरु मय्यनाथे विष्णो कृपां परमकारुणिकः किल त्वम् ॥ संसार सागरनिमग्न मनन्तदीन मुद्धर्तुमर्हसि हरे पुरुषोत्तमोऽसि ॥ २३ ॥ इति श्रीपञ्चरात्रागमे जितंतेस्तोत्रे चतुर्थोऽध्यायः ॥ ४ ॥ जितंते पुण्डरीकाक्ष नमस्ते विश्वभावन ॥ नमस्ते-

ऽस्तु हृषीकेश महापुरुषपूर्वज ॥ १ ॥
नमस्ते वासुदेवाय शान्तानन्दचिदात्मने ॥
अजिताय नमस्तुभ्यं षाड्गुण्यनिधये
नमः ॥ २ ॥ महाविभूतिसंस्थाय नमस्ते
पुरुषोत्तम ॥ सहस्रशिरसे तुभ्यं सहस्र-
चरणाय ते ॥ ३ ॥ सहस्रबाहवे तुभ्यं
सहस्रनयनाय ते ॥ अमूर्तये नमस्तुभ्य-
मेकमूर्त्ताय ते नमः ॥ ४ ॥ अनेकमूर्तये
तुभ्यमक्षराय च ते नमः ॥ व्यापिने
वेदवेद्याय नमस्ते परमात्मने ॥ ५ ॥
चिन्मात्ररूपिणे तुभ्यं नमस्तुर्यादिमू-
र्त्तये ॥ अणिष्ठाय स्थविष्ठाय महिष्ठाय
च ते नमः ॥ ६ ॥ वरिष्ठाय वसिष्ठाय
कनिष्ठाय नमो नमः ॥ नेदिष्ठाय दविष्ठाय
क्षेपिष्ठाय च ते नमः ॥ ७ ॥ पञ्चात्मने
नमस्तुभ्यं सर्वान्तर्यामिणे नमः ॥ कला

षोडशरूपाय सृष्टिस्थित्यन्तहेतवे ॥ ८ ॥
नमस्ते गुणरूपाय गुणरूपानुवर्तिने ॥
व्यस्ताय च समस्ताय समस्तव्यस्तरू-
पिणे ॥ ९ ॥ लोकयात्रा प्रसिद्ध्यर्थं
सृष्टब्रह्मादिरूपिणे ॥ नमस्तुभ्यं नृसिंहा-
दिमूर्त्तिभेदाय विष्णवे ॥ १० ॥ आदि-
मध्यान्तशून्याय तद्वते च नमो नमः ॥
प्रणवप्रतिपाद्याय नमः प्रणवरूपिणे
॥ ११ ॥ विपाकैः कर्मभिः क्लेशैरस्पृ-
ष्टवपुषे नमः ॥ नमो ब्रह्मण्यदेवाय
तेजसां निधये नमः ॥ १२ ॥ नित्यासा-
धारणानेकलोकरक्षापरिच्छदे ॥ सच्चि-
दानन्दरूपाय वरेण्याय नमो नमः ॥१३॥
यजमानाय यज्ञाय यष्टव्याय नमो नमः ॥
नित्यकालात्मने तुभ्यं नमः स्वाध्याय-
शालिने ॥ १४ ॥ नमः परमहंसाय नमः

सत्त्वगुणाय ते ॥ स्थिताय परमे व्योम्नि
भूयो भूयो नमो नमः ॥ १५ ॥ हरिर्देह-
भृतामात्मा परप्रकृतिरीश्वरः ॥ त्वत्पाद-
मूलं शरणं यतः क्षेमो नृणामिह ॥१६॥
संसार सागरे घोरे विपयावर्त्तसंकुले ॥
अपारे दुस्तरेऽगाधे वर्त्तेऽहं कर्मभिः स्व-
कैः ॥ १७ ॥ अनाथमगतिं भीरुं दयया
परया हरे ॥ मामुद्धर दयासिन्धो संसा-
रार्णवः सुदुस्तरात् ॥ १८ ॥ मन्त्रहीनं
क्रियाहीनं भक्तिहीनं यदर्चितम् ॥ तत्
क्षन्तव्यं प्रपन्नानामपराधसहो ह्यसि
॥ १९ ॥ अपराधसहस्रभाजनं पतितं
भीममवार्णवोदरे ॥ अगतिं शरणागतं
हरे कृपया केवलमात्मसात्कुरु ॥ २० ॥
जन्मप्रभृति दासोऽस्मि शिष्योऽस्मि
तनयोऽस्मि ते ॥ त्वं च स्वामी गुरुर्माता

पिता च मम माधव ॥ २१ ॥ नाहं हित्वा प्रजानामि त्वां भजाम्येव केवलम् ॥ बुद्धैवं मम गोविन्द मुक्त्युपायेन मां हरे ॥ २२ ॥ त्वां विना नान्यः प्रियो मे नेदं नेदमितीति च ॥ बुद्धिं नीतिं च मे देहि येन त्वामुपयाम्यहम् ॥ २३ ॥ इति विज्ञाप्य देवेशं वैश्वदेवं स्वधामनि ॥ कुर्यात्पञ्चमहायज्ञानपि गृह्योक्तकर्मणा ॥ २४ ॥ इत्यादिसमये तस्य कथितः कमलासनः ॥ वेदानां सारमुद्धृत्य सर्वागमसमुद्धये ॥ २५ ॥ इति श्रीपञ्चरात्रागमे महोपनिषदि ब्रह्मतन्त्रे श्रीमदष्टाक्षरकल्पे जितन्तेस्तोत्रे पञ्चमोऽध्यायः ॥ ५ ॥ ॥ २८ ॥



॥ श्रीः ॥

# ॥ यतिराजसप्ततिः ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

कमप्याद्यं गुरुं वन्दे कमलागृहमेधिनम् । प्रवक्ता छन्दसां वक्ता पञ्चरात्रस्य यः स्वयम् ॥ १ ॥ सहधर्मचारीं शौरेः संमन्त्रितजगद्धिताम् । अनुग्रहमयीं वन्दे नित्यमज्ञातनिग्रहाम् ॥ २ ॥ वन्दे वैकुण्ठसेनान्यं देवं सूत्रवतीसखम् । यद्वेत्रशिखरस्पन्दे विश्वमेतद्व्यवस्थितम् ॥ ३ ॥ यस्य [1]सारस्वतं स्रोतो वकुलामोदवासितम् । श्रुतीनां विश्रमायालं

१ सारस्वतस्रोतो.

शठारिं तमुपास्महे ॥ ४ ॥ नाथेन [2]मुनि नाथेन भवेयं नाथवानहम् । यस्य नैगमिकं तत्त्वं हस्तामलकतां गतम् ॥ ५ ॥ नमस्याम्यरविन्दाक्षं नाथभावे व्यवस्थितम् । शुद्धसत्त्वमयं शौरेरवतारमिवापरम् ॥ ६ ॥ अनुज्झितक्षमायोगमपुण्यजनबाधकम् । अस्पृष्टमदरागं तं रामं तुर्यमुपास्महे ॥ ७ ॥ विगाहे यामुनं तीर्थं साधुवृन्दावने स्थितम् । निरस्तजिह्मगस्पर्शो यत्र कृष्णः कृतादरः ॥ ८ ॥ दयानिघ्नं यतीन्द्रस्य देशिकं पूर्णमाश्रये । येन विश्वसृजो विष्णोरपूर्यत मनोरथः ॥ ९ ॥ प्रणामं लक्ष्मणमुनिः प्रतिगृह्णातु मामकम् । प्रसाधयति यत्सूक्तिः स्वाधीनपतिकां श्रुतिम् ॥ १० ॥ उपवीतिनमूर्ध्व-

२ मुनिना तेन,

पुण्ड्रवन्तं त्रिजगत्पुण्यफलं त्रिदण्डह-
स्तम् । शरणागतसार्थवाहमीडे शिखया
शेखरिणं पतिं यतीनाम् ॥ ११ ॥
प्रथयन्विमतेषु तीक्ष्णभावं प्रभुरस्मत्परि-
रक्षणे यतीन्द्रः । अपृथक्प्रतिपन्नयन्म-
यत्वैर्ववृधे पञ्चभिरायुधैर्मुरारेः ॥ १२ ॥
शमितोदयशङ्करादिगर्वः स्वबलादुद्धृत-
यादवप्रकाशः । अवरोपितवान् श्रुतेरपा-
र्थान्ननु रामावरजः स एष [1]भूयः ॥ १३ ॥
अनघपुनर्भवं श्रुतीनां जरतीनामय-
थायथप्रचारम् । विनिवर्तयितुं यतीश्व-
रोक्तिर्विदधे ताः स्थिरनीतिपञ्जरस्थाः
॥ १४ ॥ अमुना तपनातिशायिभूम्ना
यतिराजेन निबद्धनायकश्रीः । महती
गुरुपङ्क्तिहारयष्टिर्विबुधानां हृदयंगमा

१ एव.

विभाति ॥ १५ ॥ अलूनपक्षस्य यति-
क्षमाभृतो विभाति वंशे हारितस्त्वमक्षतम् ।
यदुद्भवाः शुद्धसुवृत्तशीतला भवन्ति
मुक्तावलिभूषणं भुवः ॥ १६ ॥ अनपाय-
विष्णुपदसंश्रयं भजे कलया कयापि
कलयाप्यनुज्झितम् । अकलङ्कयोगमजड़ाशयोदितं यतिराजचन्द्रमुपरागदूरगम्
॥ १७ ॥ अभिगम्य सम्यगनघाः सुमे-
धसो यतिचक्रवर्तिपदपद्मपत्तनम् । हरि-
भक्तदास्यरसिकाः परस्परं क्रयविक्रयार्ह-
दशया समिन्धते ॥ १८ ॥ परुषातिवाद-
परिवादपैशुनप्रभृतिप्रभूतपतनीयपङ्किला ।
स्वदते ममाद्य सुभगा सरस्वती यतिरा-
जकीर्तिकतकैर्विशोधिता ॥ १९ ॥ अनु-
कल्पभूतमुरभित्पदं सतामजहत्त्रिवर्ग-
मपवर्गवैभवम् । चलचित्तवृत्तिविनिवर्त-

नौषधं शरणं यतीन्द्रचरणं वृणीमहे ॥ २० ॥ श्वसितावधूतपरवादिवैभवा निगमान्तनीतिजलधेस्तलस्पृशः। प्रतिपादयन्ति गतिमापवर्गिकीं यतिसार्वभौमपदसात्कृताशयाः ॥ २१ ॥ मूले निवेश्य महतां निगमद्रुमाणां मुष्णन्प्रतारकभयं धृतैकदण्डः। रङ्गेशभक्तजनमानसराजहंसो रामानुजः शरणमस्तु मुनिः स्वयं नः ॥ २२ ॥ सन्मन्त्रवित्तिपति संयमिनां नरेन्द्रः संसारजिह्मगमुखैः समुपास्थितं नः। विष्वक्ततं विषयलोभविषं निजाभिर्गाढानुभावगरुडध्वजभावनाभिः ॥ २३ ॥ नाथः स एष यमिनां नखरश्मिजालैरन्तर्निलीनमपनीय तमो मदीयम्। विज्ञानचित्रमनघं लिखतीव चित्ते व्याख्यानकेलिरसिकेन कराम्बुजेन ॥ २४ ॥

उद्गृह्णतीमुपनिषत्सु निगूढमर्थं चित्ते नि-
वेशयितुमल्पधियां स्वयं नः । पश्येम
लक्ष्मणमुनेः प्रतिपन्नहस्तामुन्निद्रपद्मसु-
भगामुपदेशमुद्राम् ॥ २५ ॥ आकर्षणा-
नि निगमान्तसरस्वतीनामुच्चाटनानि
बहिरन्तरुपप्लवानाम् । पथ्यानि घोर-
भवसंज्वरपीडितानां हृद्यानि भान्ति
यतिराजमुनेर्वचांसि ॥ २६ ॥ शीतस्वभा-
वसुभगानुभवः शिखावान् दोषावमर्द-
नियतोन्नतिरोषधीशः । तापानुबन्धश-
मनस्तपनः प्रजानां रामनुजो जयति-
संवलितत्रिधामा ॥ २७ ॥ जयति सक-
लविद्यावाहिनीजन्मशैलो जनिपथपरि-
वृत्तिश्रान्तविश्रान्तिशाखी । निखिलकु-
मतिमायाशर्वरीबालसूर्यो निगमजलधि-
वेलापूर्णचन्द्रो यतीन्द्रः ॥ २८ ॥ मुनिब-

हुमतसारा मुक्तिनिश्रेणिकेयं सहृदयहृ-
दयानां शाश्वती दिष्टसिद्धिः । शमितदु-
रितगन्धा संयमीन्द्रस्य सूक्तिः परिचित-
गहना नः प्रस्नुवीत प्रसादम् ॥ २६ ॥

भवमरुपरिखिन्नस्फीतपानीयसिन्धुर्दुरि-
तरहितजिह्वादुग्धकुल्यासकुल्या । श्रुति-
नयनसनाभिः शोभते लक्ष्मणोक्तिर्नर-
कमथनसेवास्वादनाडिंधमा नः ॥ ३० ॥

हरिपदमकरन्दस्यन्दिनः संश्रितानाम-
नुगतबहुशाखास्तापमुन्मूलयन्ति । श-
मितदुरितगन्धाः संयमीन्द्रप्रबन्धाः
कथकजनमनीषाकल्पनाकल्पवृक्षाः
॥ ३१ ॥ नानाभूतैर्जगति समयैर्नर्मलीला
विधित्सोरन्त्यं वर्णं प्रथयति त्रिमोरा-
दिमव्यूहभेदे । विश्वं त्रातुं विषयनियतं
व्यञ्जितानुग्रहः सन् विष्वक्सेनो यतिप-

तिरभूद्वेत्रसारस्त्रिदण्डः ॥३२॥ लक्ष्यं बुद्धे रसिकरसनालास्यलीलानिदानं शुद्धास्वादं किमपि जगति श्रोत्रादिव्यौषधं नः। लक्ष्यालक्ष्यैः सितजलधिवद्भाति तात्पर्यरत्नैर्लक्ष्मीकान्तस्फटिकमुकुरो लक्ष्मणार्योपदेशः ॥३३॥ स्थितिमवधीरयन्त्यतिमनोरथसिद्धिमतीं यतिपतिसंप्रदायानिरपायधनोपचिताः। मधुकरमौळिदघ्नमददन्तुरदन्तिघटाकरटकटाहवाहिघनशीकरशीभरिताम् ॥३४॥ निरुपाधिरङ्गवृत्तिरसिकानभिताण्डवयन्निगमाविमर्शकेलिरसिकैर्निभृतैर्विधृतः। गुणपरिणद्धसूक्तिदढकोणविघट्टनया रटति दिशामुखेषु यतिराजयशःपटहः ॥३५॥ इदंप्रथमसंभवत्कुमतिजालकूलङ्कषा मृषामताविषानलज्वलितजीवजीवातवः। चरन्त्यमृतमत्तरं

यतिपुरन्दरस्योक्तयश्चिरंतनसरस्वतीचिकुरबन्धसैरन्ध्रिकाः ॥ ३६ ॥ सुधाशनसुदुर्ग्रहं श्रुतिसमष्टिमुष्टिन्धयः कथाहवमसौगतान्कपटसौगतान्खण्डयन् । मुनिर्मनसि लक्ष्मणो मुदमुदञ्चयत्यञ्जसा मुकुन्दगुणमौक्तिकप्रकरशुक्तिभिः सूक्तिभिः ॥ ३७ ॥ कपर्दिमतकर्दमं कपिलकल्पनावागुरां दुरत्ययमतीत्य तद्द्रुहिणतन्त्रयन्त्रोदरम् । कुदृष्टिकुहनामुखे निपततः परब्रह्मणः करग्रहविचक्षणो जयति लक्ष्मणोऽयं मुनिः ॥ ३८ ॥ कणादपरिपाटिभिः कपिलकल्पनानाटकैः कुमारिलकुभाषितैर्गुरुनिबन्धनग्रन्थिभिः । तथागतकथाशतैस्तदनुसारिजल्पैरपि प्रतारितमिदं जगत्प्रगुणितं यतीन्द्रोक्तिभिः ॥ ३९ ॥ कथाकलहकौतुकग्रहगृहीतकौ-

तस्कृतप्रथाजलधिसंप्लवग्रसनकुम्भसं-
भूतयः । जयन्ति सुधियो यतिक्षितिभृद-
न्तिकोपासनाप्रभावपरिपाक्रिमप्रमिति-
भारतीसंपदः ॥ ४० ॥ यतीश्वरसरस्वती-
सुरभिताशयानां सतां वहामि चरणाम्बु-
जं प्रणतिशालिना मौलिना । तदन्यमत-
दुर्मतज्वलितचेतसां वादिनां शिरस्सु नि-
हितं मया पदमदक्षिणं लक्ष्यताम्
॥ ४१ ॥ भजस्व यतिभूपतेरनिदमादि-
दुर्वासनाकदध्वपरिवर्तनश्रमानिवर्तनीं
वर्तनीम् । लभस्व हृदय स्वयं रथपदा-
युधानुग्रहद्रुतप्रहतिनिस्त्रुटद्दुरितदुर्वृति-
निर्वृतिम् ॥ ४२ ॥ कुमतिविहितग्रन्थ-
ग्रन्थिप्रभूतमतान्तरग्रहिळमनसः पश्य-
न्त्वल्पां यतीश्वरभारतीम् । विकटमुर-
भिद्वक्षःपीठीपरिष्करणोचितः कुलगिरि-

तुलारोहे भावी कियानिव कौस्तुभः ॥ ४३ ॥ स्थविरनिगमस्तोमस्थेयां यतीश्वरभारतीं कुमतिफणितिक्षोभक्षीबाः क्षिपन्तु भजन्तु वा । रसपरिमळउल्लाघाघोपस्फुटत्पुटभेदनं लवणवणिजः कर्पूरार्घं किमित्यभिमन्वते ॥ ४४ ॥ वहति मल्लिकामाद्यो वेधास्त्रयीमुखरैर्मुखैर्वरतनुतया वामो भागः शिवस्य विवर्तते । तदपि परमं तत्त्वं गोपीजनस्य वशंवदं मदनकदनैर्न क्लिश्यन्ते यतीश्वरसंश्रयाः ॥ ४५ ॥ निगमपथिकच्छायाशाखी निरागमहानिधिर्महितविविधच्छात्रश्रेणीमनोज्ञसमाग्रधिः । त्रिभुवनतमः पत्यूपोऽयं त्रिविद्यशिखामणिः प्रथयति यतिक्ष्माभृत्पागवीमविपर्ययाम् ॥ ४६ ॥ जडमतिमुखाद्न्तादन्तिव्यथापथसिद्धयः प्रमि-

तिनिधयः प्रज्ञाशालिप्रपालनयष्टयः।
श्रुतिसुरभयः शुद्धानन्दाभिवर्षुकवारिदा
यमगतिकथाविच्छेदिन्यो यतीश्वरसूक्त-
यः ॥ ४७ ॥ प्रतिकलमिह प्रत्यक्तत्त्वाव-
लोकनदीपिका यतिपरिबृढग्रन्थाश्चिन्तां
निरन्तरयन्ति नः। अकलुषपरज्ञानौत्सु-
क्यक्षुधातुरदुर्दशापरिणतफलप्रत्यासी-
दत्फलेग्रहिसुग्रहाः ॥ ४८ ॥ मुकुन्दा-
ङ्घ्रिश्रद्धाकुमुदवनचन्द्रातपनिभा सुमु-
क्षामक्षोभ्यां ददाति मुनिबृन्दारकगिरः।
स्वसिद्धान्तध्वान्तस्थिरकुतुकदुर्वादिपरि-
षद्दिवाभीतप्रेक्षादिनकरसमुत्थानपरुषाः
॥ ४९ ॥ निराबाधा बोधायनभणितिनि-
ष्यन्दसुभगा विशुद्धोपन्यासव्यातिभिदुर-
शारीरकनयाः। अकुण्ठैः कल्पन्ते यति-
पतिनिबन्धा निजमुखैरनिद्राणप्र-

ज्ञारसधमनिवेधाय सुधियाम् ॥ ५० ॥
विकल्पाटोपेन श्रुतिपथमशेषं विघटयन्
यदृच्छानिर्दिष्टे यतिनृपतिशब्दे विरमति
। वितण्डाहंकुर्वत्प्रतिकथकवैतण्डपृतना-
वियातव्यापारव्यतिमथनसंरम्भकलहः ।
॥ ५१ ॥ प्रतिष्ठा तर्काणां प्रतिपदमृचां-
धाम यजुषां परिष्कारः साम्नां परिपण-
मथर्वाङ्गिरसयोः । प्रदीपस्तत्त्वानां प्रति-
कृतिरसौ तापसगिरां प्रसत्तिं संवित्तेः प्र-
दिशति यतीशानफणितिः ॥ ५२ ॥ ह-
तावद्ये हृद्ये हरिचरणपङ्केरुहयुगे निबध्न-
न्नैषेकान्त्यं किमपि यतिभूभृद्गणितयः ।
शुनासीरस्कन्दद्रुहिणहरहेरम्बहुतभुक्प्र-
भेशादिक्षुद्रप्रणतिपरिहारप्रतिभुवः ।
॥ ५३ ॥ यथाभूतस्वार्था यतिनृपतिसूक्ति-
र्विजयते सुधास्यंदोदाराभिः सुचरितविपाकैः

श्रुतिमताम् । कथादृप्यत्कौतस्कुतकलहकोलाहलहतत्रिवेदीनिर्वेदप्रशमनविनोदप्रणायिनी ॥५४ ॥ श्रुतिश्रेणीचूडापदबहुमते लक्ष्मणमते स्वपक्षस्थान्दोषान्वितथमतिरारोपयति यः। स्वहस्तेनोत्क्षिप्तैः स खलु निजगात्रेषु बहुळं गळद्भिर्जम्बालैर्गगनतलमालिम्पति जडः॥ ५५ ॥ निरालोके लोके निरुपधिपरस्नेहभरितो यतिक्ष्माभृद्दीपो यदि न किल जाज्वल्यत इह । अहंकारध्वान्तं विजहति कथंकारमनघाः कुतर्कव्याळौघं कुमतिमतपाताळकुहरम् ॥ ५६ ॥ यतिक्ष्माभृद्दृष्टंमतमिह नवीनं तदपि किं ततः प्रागेवान्यद्वद तदपि किं वर्णनिकषे । निशाम्यन्तां यद्वा निजमतितिरस्कारविगमान्निरातङ्काष्टङ्कद्रमिडगुहदेवप्रभृतयः ॥ ५७

सुधासारं श्रीमद्यतिवरभुवः श्रोत्रकुहरे निषिञ्चन्ति न्यञ्चन्निगमगरिमाणः फणितयः । यदास्वादाभ्यासप्रचयमहिमोल्लासितधियां सदास्वाद्यं काले तदमृतमनन्तं सुमनसाम् ॥ ५८ ॥ प्रतिक्षोणीभर्तुर्यदिदमनिदंभोगजननाशिरःश्रेणीजुष्टं नदिह दृढबन्धं प्रभवति । अविद्यारण्यान्तीकुहरविहरन्मामकमनःप्रमाद्यन्मातङ्गप्रथमनिगळं पादयुगळम् ॥ ५९ ॥ सवित्री मुक्तानां सकलजगदेनःप्रशमनी यतीन्द्रोभिख्तीर्थैरुपचितरसा या मुनिमुखैः । निरुच्छेदा निरन्तेतरमपि समाप्लावयति मां यदङ्घ्रिक्ष्मातेलपाद्यतिपतिदयादिव्यतटिनी ॥ ६० ॥ चिन्ताशोषदुरर्थन्तुग्वचःकन्थाऽऽतग्रन्थिलाः सिद्धा-

१ दृढबद्धं प्रभवतु ।

न्ता न समिन्धते यतिपतिग्रन्थानुसंधायिनि । मुक्ताशुक्तिविशुद्धसिद्धतटिनीचूडालचूडापदः किं कुल्यां कलयेत खण्डपरशुर्मराड्डकमञ्जूषिकाम् ॥ ६१ ॥ वन्दे तं यमिनां धुरंधरमहं मानान्धकारद्रुहा पन्थानं परिपन्थिनां निजदृशा रुन्धानमिन्धानया । दत्तं येन दयासुधाम्बुनिधिना पीत्वा विशुद्धं पयः काले नः करिशैलकृष्णजलदः काङ्क्षाधिकं वर्षति ॥ ६२ ॥ काषायेण गृहीतपीतवसना दण्डैस्त्रिभिर्मण्डिता सा मूर्तिर्मुरमर्दनस्य जयति त्रय्यन्तसंरक्षिणी । यत्प्रख्यापिततीर्थवर्धितधियामभ्यस्यतां यद्गुणाना सिन्धोरनिदंप्रदेशनियता कीर्तिः प्रजागर्ति नः ॥ ६३ ॥ लिप्से लक्ष्मणयोगिनः पदयुगं रथ्यापरागच्छटारक्षारो-

पद्मा धन्यसूरिपरिषत्सीमन्तसीमान्तिकम् ।
भिक्षापर्यटनक्षणेषु विभरांचक्रे गळ-
त्किल्विषा यद्विन्यासमिषेण पत्रमकरी-
मुद्रां समुद्राम्बरा ॥ ६४ ॥ नानातन्त्र-
विलोभितेन मनसा निर्णीतदुर्नीतिभिः
कष्टं कुत्सितदृष्टिभिर्यतिपतेरादेशवैदेशि-
कैः । व्यासो हासपदीकृतः परिहृतः
प्राचेतसश्चेतसः क्लृप्तः केळिशुकः
शुकः स च सुधाबाधाय बोधायनः॥६५॥
अर्थ्या तिष्ठति मामिका मतिरसावाजन्म-
राजन्वती पत्या संयमिनामनेन जगता-
मत्याहितच्छेदिना । यत्सारस्वतदुग्ध-
सागरसुधासिद्धौपधास्वादिनां प्रस्वापाय
न चोभवीति भगवन्मायामहायामिनी
॥ ६६ ॥ गुर्वादेशवशंवदीकृतयतिक्षो-
णीशवाणीशतामन्यादिष्टवहिर्गतिः श्रुति-

शिरःप्रासादमासीदिति । दुग्धोदन्वदपत्यसंनिधिसदासामोददामोदरश्लक्ष्णालोकनदौर्ललित्यललितोन्मेषा मनीषा मम ॥ ६७ ॥ आस्तां नाम यतीन्द्रपद्धतिजुषामाजानशुद्धा मतिस्तच्चाऽप्याजविदग्धमुग्धमधुरं सारस्वतं शाश्वतम् । को वा चक्षुरुदञ्चयेदपि पुरः साटोपतर्कच्छटाशस्त्राशस्त्रिविहारसंभृतरणास्वादेषु वादेषु नः ॥ ६८ ॥ पर्याप्तं पर्यचैषं कणचरणकथामाक्षपादं शिशिक्षे मीमांसामांसलात्मा समजनिषि मुहुः सांख्ययोगौ सख्यम् । इत्थं तैस्तैर्यतीन्द्रत्रुटितबहुमृषातन्त्रकान्तारपान्थैरन्तर्मोहक्षपान्धैरहह किमिह नाश्चिन्तनीयं तनीयः ॥ ६९ ॥ गाथा ताथागतानां गळति गमनिका कापिली कापि लीना क्षीणा काणादवाणी

द्रुहिणाहृग्गिरः सौरभं नारभन्ते । त्वामा कौमारिकोक्तिर्जगति गुरुमतं गौरवाद्रूरवान्तं का शङ्का शङ्करादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥ ७० ॥ विष्वग्व्यापिन्यगाधे यतिनृपतियशः संपदेकार्णवेऽस्मिन् श्रद्धाशुद्धावगाहैः शुभमतिभिरसौ वेङ्कटेशोऽभिषिक्तः । प्रज्ञादौर्जन्यगर्जत्प्रतिकथकवचस्तूलवातूलवृत्त्या सप्तत्या सारवत्या समतनुत सतां प्रीतिमेतां समेताम् ॥ ७१ ॥ आशामतङ्गजगणानविपह्यवेगान्पादे यतिक्षितिभृतः प्रसभं निरुन्धन् । कार्यः कथाहववकुतूहलिभिः परेषां कर्णे स एष कवितार्किकसिंहनादः ॥ ७२ ॥ उपशमितकुदृष्टिविभ्रमाणामुपनिपदामुपचारदीपिकेयम् । कवलितभगवद्विभूतियुग्मां दिशतु मतिं

तिराजसप्ततिर्नः ॥ ७३ ॥ करतलामलकीकृतसत्पथाः श्रुतिवतांसितसूनृतसूक्तयः । दिवसतारकयन्ति समत्सरान् यतिपुरन्दरसप्ततिसादराः ॥ ७४ ॥

---

॥ यतिराजसप्ततिः संपूर्णा ॥

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥



श्रीमते रामानुजाय नमः ।

# श्रीमद्वेदान्तदेशिकदिनचर्यास्तोत्रम् ।

---

श्रीमल्लक्ष्मणयोगीन्द्रसिद्धान्तविजयध्वजम् ।
विश्वामित्रकुलोद्भूतं वरदार्यमहं भजे ॥

काञ्चीपुरी यस्य हि जन्मभूमि विंहा-
रभूर्वेङ्कट भूधरेन्द्रः ॥वासस्थली रङ्गपुरीं
त मीड्यं. श्रीवेंकटेशं गुरुमाश्रयामः
॥ १ ॥ सम्भावना यस्य हि कालकूट
स्सभा भुजङ्गीकुचापं तरुण्यः ॥ स्याद्रौरवं
राजगृहं स जीयाच्चिरं गुरुर्वेंकटनाथ-
नामा ॥ २ ॥ यः प्रातरभ्येत्य हरिं शुची-
निः द्रव्याण्युपादाय शुचिः कृतज्ञः ॥
स्वाध्याययुक्तो निशि योगरूपां निद्रां
समागच्छति तं नतास्स्मः ॥ ३ ॥ यामे

तुरीये यतवाग्रजन्या; विहाय शय्यां विहताङ्घ्रिशुद्धिः ॥ योऽत्यादरेणास्थित-योगशेष, स्तं वेंकटेशंगुरुमानमामः ॥ ४ ॥ ततोऽनुसन्धाय ताति गुरूणां तत्रा-पि देवं रमणां स्मायाः ॥ तत्कालयोग्या-नि तथा विधानि, हृद्यानि पद्यानि पठ-न्तमीडे ॥ ५ ॥ उत्थाय गेहादुपगम्य र-म्यां कवेरकन्यां कलितांघ्रि शुद्धिः ॥ द-तो विशोध्याप्सु निमज्य शुभ्रं, वस्त्रं व-सानं तमहं स्मरामि ॥ ६ ॥ धृत्वोर्द्ध्वपुण-ड्राणि सरोजबीज, मालामवन्ध्यां समु-पास्थसन्ध्याम् ॥ सावित्रमीशं सवितुः पुरस्तात्स्तुवन्तमेकाग्रधिया स्तुवे तम् ॥ ७ ॥ ततः सुपूर्वाह्निकनित्यकर्म, नि-र्वर्त्य नित्येष्टनिवृत्तिमार्गः॥श्रीरङ्गधामो-पसमेत्य सेवाक्रमेण रङ्गेश्वरपादमूलम्

॥ ८ ॥ प्राबोधिकीभिः प्रतिबोध्य गी-
र्भिः प्रसाद्य तद्भव्यमुखैः प्रबन्धैः॥ आशा-
स्य तन्मंगलमाप्तवाक्यै, रापादचूडं कल-
यन्तमीडे ॥ ९ ॥ तीर्थप्रसादादिकमत्र
लब्ध्वा, विज्ञाप्य देवाय ततो विसृष्टः॥
शनैरुपेत्याश्रमकल्पमात्म, गृहं सुखासी-
नमहं स्मरामि ॥ १० ॥ व्याख्यानशा-
लामुपगम्य चाथो, शिष्याननन्याश्रव-
णाभिमुख्यान्॥ संग्राहयन्तं सकलानि
तन्त्रा, ण्यतन्द्रितं तं गुरुमाश्रयाम्
॥ ११ ॥ तास्संस्कृताविडद्रिव्यसूक्तीः,
प्रसन्नगम्भीरतया प्रसिद्धाः ॥ नतद्रुचि-
स्पर्शनया विशेषं, प्रवेमि दान्तं प्रति-
पादयन्तम् ॥ १२ ॥ शिष्यैकपादानपरैरन-
न्यैः समर्पितं भक्तिपुरस्सरं यत् ॥

तेनैव शुद्धेन यथोदितेन, तुष्यन्तमीडे तुष-
तुल्यरुक्मम् ॥ १३ ॥ इत्थं ह्युपादाय च
शास्त्रशिक्षां, तांश्चाप्युपादानपदे निवेश्य
॥ माध्याह्निकं कर्म समाप्य पश्चा,
द्वन्दे यजन्तं वरदं सदारम् ॥ १४ ॥ अत-
स्करग्राह्यपवित्रपात्रै, रनिन्द्रियोन्मादक-
रैर्हविर्भिः॥ आराध्य देवं कमलासहाय-
माराधये तं विहितानुयागम् ॥ १५ ॥
यामे चतुर्थे निहतारिवर्ग प्रबन्धनिर्माण
विलोकनाद्यैः ॥ तथा पुराणाद्यवलो-
कनैश्च; कालं क्षिपन्तं कलये गुरुं तम्
॥ १६ ॥ सायन्तनं कर्म समाप्य पश्चा,
त्समेत्य च श्रीवरदाह्वयस्य ॥ सहान्त-
रङ्गैः कुलदैवतस्य, समीपमारात्प्रणतं
स्मरामि ॥ १७ ॥ आशास्य चास्मै बहु-
मङ्गलानि, तैस्तैः प्रबन्धैश्च तदीयपङ्क्तीः ॥

स्तुत्वैकतानं प्रतिगृह्य तीर्थं प्रसादमेनं
कृतकृत्यमीडे ॥ १८ ॥ अथान्तरङ्गैरुपदे-
वगेहं सन्यास्य पीठं सरसैर्वचोभिः ॥
तेषां सुमृद्भार्यविशेषशिक्षां कुर्वाण-
मीडीमहि वेङ्कटेशम् ॥ १९ ॥ शिष्यान-
नुज्ञाप्य सुमृत्स्नबुद्धीन्कृतप्रणामान्कृप
या गृहेभ्यः ॥ अध्यास्य शुद्धं शयनीय-
मत्र. योगाय गन्तुमहं स्मरामि ॥ २० ॥
तत्पुराङ्गोके चरदं मदारं. निवेश्य तत्पा-
दसरोजयुग्मे ॥ आबध्य चित्तं सुसुखं
शयान,—माराधये देशिकमस्मदीयम्
॥ २१ ॥ योग स्वरूपामनुभूय निद्रां.
यामे तुरीये प्रतिबुध्य भूयः ॥ स्वस्वा-
मिमात्राकलनात्मयोगं, भजे भजन्तं गु-
रुवेङ्कटेशम् ॥ २२ ॥ इत्थं यतीन्द्र
सर्वतन्त्र,—स्वतन्त्रवेदान्तगुरुनामकस्य ॥

नित्याभिजप्यां शुभनित्यचर्य्यां जपन्ति ये ते दुरितं तरन्ति ॥ २३ ॥

इति श्रीनयिनाराचार्यकृतिषु श्रीमद्वेदान्तदेशिक-
दिनचर्य्यास्तोत्रं सम्पूर्णम् ॥

---

॥ श्रीः ॥

# * न्यासविंशतिः । *

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

सिद्धं सत्संप्रदाये स्थिरधियमनघं श्रोत्रियं ब्रह्मनिष्ठं सत्त्वस्थं सत्यवाचं समयनियतया साधुवृत्त्या समेतम् । डम्भासूयादिमुक्तं जितविषयगणं दीर्घबन्धुं

दयालुं स्वालिप्से शासितारं स्वपरहितपरं देशिकं भूष्णुरीप्सेत् ॥ १ ॥ अज्ञानध्वान्तरोधादघपरिहरणादात्मसाम्यावहत्वाज्जन्मप्रध्वंसिजन्मप्रदगरिमतया दिव्यदृष्टिप्रभावात् । निष्प्रत्यूहानृशंस्यान्नियतरसतया नित्यशेषित्वयोगादाचार्यः सद्भिरप्रत्युपकरणधिया देववत्स्यादुपास्यः ॥ २ ॥ सद्बुद्धिः साधुसेवी समुचितचरितस्तत्त्वबोधाभिलाषी शुश्रूषुस्त्यक्तमानः प्रणिपतनपरः प्रश्नकालप्रतीक्षः । शान्तो दान्तोऽनसूयः शरणमुपगतः शास्त्रविश्वासशाली शिष्यः प्राप्तः परीक्षां कृतविदभिमतं तत्त्वतः शिक्षणीयः ॥ ३ ॥ स्वाधीनाशेषसत्ताऽस्थितिनियमनलक्ष्मं विद्धि लक्ष्मीशमेकं प्राप्यं नान्यं प्रतीया न च शरणतया कंचिदन्यं वृणीयाः । एतस्मा-

देव पुंसां भयमितरदपि प्रेक्ष्य मोज्झी-
स्तदाज्ञामित्येकान्तोपदेशः प्रथममिह
गुरोरेकचित्तेन धार्यः ॥ ४ ॥ मोक्षोपाया-
इतैवं भवति भवभृतां कस्यचित्क्वापि
काले तद्वद्भक्तिप्रपत्त्योरधिकृतिनियम-
स्तादृशा स्यान्नियत्या । शक्ताशक्तादितत्त-
त्पुरुषविषयतः स्थाप्यते तद्व्यवस्था
यत्त्वाहुस्तद्विकल्पः सम इति कतिचित्त-
त्फलस्याविशेषात् ॥ ५ ॥ सानुक्रोशे
समर्थे प्रपदनमृषिभिः स्मर्यतेऽभीष्ट-
सिद्ध्यै लोकेऽप्येतत्प्रसिद्धं न च विमति-
रिह प्रेक्ष्यते क्वापि तन्त्रे ॥ तस्मात्कैमु-
त्यसिद्धं भगवति तु भरन्यासविद्यानु-
भावं धर्मस्थेयाश्च पूर्वे स्वकृतिषु बहुधा
स्थापयांचक्रुरेवम् ॥ ६ ॥ शास्त्रप्रामा-
ण्यवेदी ननु विधिविषये निर्विशङ्कोऽधि-

कारी विश्वासस्याङ्गभावे पुनरिह विदुषा
किं महत्त्वं प्रसाध्यम् ॥ मैवं घोरापराधैः
सपदि गुरुफले न्यासमात्रेण लभ्ये
शङ्का पार्ष्णिग्रहार्ता शमयितुमुचिता
हेतुभिस्तत्तदर्हैः ॥ ७ ॥ नेहाभिक्रान्ति-
नाशो न च विमतिरिह प्रत्यवायो भवे-
दित्युक्तं कैमुत्यनीत्या प्रपदनविषये यो-
जितं शास्त्रविद्भिः ॥ तस्मात्क्षेत्रे तदर्हैः
सुविदितसमयैर्दैशिकैः स्वल्पगुप्तं मन्त्रा-
ख्यं मुक्तिबीजं परिणतिवशतः कल्पते
सत्फलाय ॥ ८ ॥ न्यासः प्रोक्तोऽतिरिक्तं
तप इति कथितः स्वस्वस्वाम्य कर्ता-
दिर्मुख्योऽप्यन्यवादिद्रुगाणि त्रिविधा-
सुलभं गुह्यमेतत् ॥ साक्षान्मोक्षाय
चार्थी श्रुत इह नु मुधा चापलाद्वा गु-
णाढ्यं नस्त्रितां न्यासनिष्ठानमुपनिग-

यितुं कोटिकोट्यंशतोऽपि ॥ ९ ॥ नानाशब्दादिभेदादिति तु कथयता सूत्रकारेण सम्यङ्न्यासोपासे विभक्ते यजनहवनवच्छब्दभेदादभाक्तात् । आख्यारूपादिभेदः श्रुत इतरसमः किंच भिन्नोऽधिकारः शीघ्रप्राप्त्यादिभिः स्याज्जगुरिति च मधूपासनादौ व्यवस्थाम् ॥ १० ॥ यत्किंचिद्रक्षणीयं तदवननिपुणो न्यस्यतोऽकिंचनस्य प्रस्पष्टं लोकदृष्ट्याप्यवगमित इह प्रार्थनाद्यङ्गयोगः । तस्मात्कर्माङ्गकत्वं व्यपनयति परापेक्षणाभाववादः साङ्गे त्वष्टाङ्गयोगव्यवहृतिनयतः षड्विधत्वोपचारः ॥ ११ ॥ पञ्चाप्यङ्गान्यभिज्ञाः प्रणिजगुरविनाभावभाञ्जि प्रपत्तेः कैश्चित्संभावितत्वंयदिह निगतंदि तत्प्रपत्त्युत्तरं स्यात् । अङ्गेष्वङ्गित्ववादः

फलकथनमिह द्वित्रिमात्रोक्तयश्च प्राशस्त्यं तत्र तत्र प्रथिदयति ततः सर्ववाक्यैककण्ठ्यम् ॥ १२ ॥ रक्षापेक्षा स्वसाध्यप्रख्यापयति प्रपत्त्यांग आज्ञादिदृष्टे दृष्टा नात्र प्रपत्तिव्यवहृतिरिह तन्मेळने लक्षणं स्यात् ॥ गेहागत्यादिमात्रे निपततु शरणागत्यभिख्योपचारागद्धा नैकार्थभावाद्भवति हि विविधः पालनीयत्वहेतुः ॥ १३ ॥ आत्मात्मीयस्वरूपन्यसनमनुगतं यावदर्थं मुमुक्षोस्तत्त्वज्ञानात्मकं तत्प्रथममथ विधेः स्यादुपायेमनेनम ॥ कैंकर्याख्ये पुमर्थेऽप्यनुपजनि तदप्यर्थनाहेतुभावात्स्वाभीष्टान्यस्माच्चावाधिरिह तु भरन्यासभागोऽङ्गिभूतः ॥ १४ ॥ न्यासादेशोपु धर्मत्यजनवचनतोऽकिंचनाधिक्रियोक्ता कार्प-

णयं वाङ्मुक्तं भजनवदितरापेक्षणं वा-
प्यपोढम् ॥ दुःसाधेच्छोद्यमौ वा क्वचि-
दुपशमितावन्यसंमेळने वा ब्रह्मास्त्रन्याय
उक्तस्तदिह न विहतो धर्म आज्ञादि-
सिद्धः ॥ १५ ॥ आदेष्टुं स्वप्रपत्तिं तदनु-
गुणगुणाद्यन्वितं स्वं मुकुन्दो मामित्यु-
क्त्वैकशब्दं वदति तदुचितं तत्र तात्पर्य-
मूह्यम् ॥ तत्प्राप्यप्रापकैक्यं सकलफल-
दतां न्यासतोऽन्यानपेक्षां प्राधान्या-
द्यं च किंचित्प्रथयति स परं श्रीसखे
मुक्त्युपाये ॥ १६ ॥ स्वाभीष्टप्राप्तिहेतुः
स्वयमिह पुरुषैः स्वीकृतः स्यादुपायः
शास्त्रे लोके च सिद्धः स पुनरुभयथा
सिद्धसाध्यप्रभेदात् ॥ सिद्धोपायस्तु मुक्तौ
निरवधिकदयः श्रीसखः सर्वशक्तिः
साध्योपायस्तु भक्तिर्न्यसनमिति पृथक्त-

द्धशीकारसिद्ध्यै ॥ १७ ॥ अत्यन्ताकिं-
चनोऽहं त्वदपचरणातः संनिवृत्तोऽद्य
नाथ त्वत्सेवैकान्तधीः स्यां त्वमसि
शरण्यामित्यध्यवस्यामि गाढम् ॥ त्वं मे
गोपायिता स्यास्त्वयि निहितभरोऽस्म्ये-
वमित्यर्पितात्मा यस्मै स न्यस्तभारः
सकृदथ तु सदा न प्रयस्येत्तदर्थम्
॥ १८ ॥ त्यक्त्वोपायानपायानपि परम-
जहन्मध्यमां स्वार्हवृत्तिं प्रायश्चित्तं च
योग्यं विगतमृशानातिर्द्वन्द्ववात्यां ति-
तिक्षुः ॥ भक्तिज्ञानादिवृद्धिं परिचरणा-
गुणान्नम्नस्थितिं च युक्त्या नित्यं याचे-
दनन्यस्तदपि भगवतस्तस्य यद्वासव-
र्गान् ॥ १९ ॥ त्वाज्ञाकैङ्कर्यवृत्तिष्वनघ-
गुरुजनप्रक्रियानेमिवृत्तिः स्वार्हानुज्ञात-
सेवाविधिषु च शकन यावदिष्टं प्रवृत्तः

कर्म प्रारब्धकार्यं प्रपदनमहिमध्वस्तशेषं द्विरूपं भुक्त्वा स्वाभीष्टकाले विशति भगवतः पादमूलं प्रपन्नः ॥ २० ॥ श्रुत्या स्मृत्यादिभिश्च स्वयमिह भगवद्वाक्यवर्गैश्च सिद्धां स्वातन्त्र्ये पारतन्त्र्येऽप्यनितरगतिभिः सद्भिरास्थीयमानाम् ॥ वेदान्ताचार्य इत्थं विविधगुरुजनग्रन्थसंवादवत्या विंशत्या न्यासविद्यांऽप्यवृणुत सुधियां श्रेयसे वेङ्कटेशः ॥ २१ ॥ संसारावर्तवेगप्रशमनशुभदृग्देशिकप्रेक्षितोऽहं संत्यक्तोऽन्यैरुपायैरनुचितचरितेष्वद्य शान्ताभिसंधिः । निःशङ्कस्तत्त्वदृष्ट्या निरवधिकदयं प्राप्य संरक्षकं त्वां न्यस्य त्वत्पादपद्मे वरद निजभरं निर्भरो निर्भयोऽस्मि ॥ २२ ॥

॥ न्यासविंशतिः संपूर्णा ॥

॥ श्रीः ॥

# * न्यासतिलकम् *

श्रीमान्वेंकटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

गुरुभ्यस्तद्गुरुभ्यश्च नमोवाकमधीमहे । वृणीमहे च तत्राद्यौ दंपती जगतां पती ॥ १ ॥[1] प्रायः प्रपदने पुंसां पौनःपुन्यं निवारयन् । हस्तः श्रीरङ्गभर्तुर्मामव्यादभयमुद्रितः ॥ २ ॥ अनादेर्निःसीम्नो दुरितजलधेर्यन्निरुपमं विदुः प्रायश्चित्तं यदुकुलधुरीणाशयविदः । तदारम्भे तस्या गिरमवदधानेन मनसा प्रपद्ये तामेकां

१. इदं पद्यं प्राचीनेषु तालपत्रकोशेषु केषुचन न दृश्यते ।

श्रियमखिलनाथस्य महिषीम् ॥ ३ ॥
महेन्द्राग्निविष्णुप्रभृतिषु महत्त्वप्रभृतिवत्प्र
पत्तव्ये तत्त्वे परिगणितवैशिष्ट्यविभ-
वाम् । अधृष्यत्वं धृत्वा कमितुरभिगम्य-
त्वजननीं श्रियं शीतापाङ्गामहमशरणो
यामि शरणम् ॥ ४ ॥ स्वतःसिद्धः श्रीमा-
नमितगुणभूमा करुणया विधाय
ब्रह्मादीन्वितरति निजादेशमपि यः । प्रप-
त्त्या साक्षाद्वा भजनशिरसा वापि सुलभं
मुमुक्षुर्देवेशं तमहमधिगच्छामि शरणम्
॥ ५ ॥ वृन्दानि यः स्ववशयन्व्रजसुन्द-
रीणां वृन्दावनान्तरभुवां सुलभो बभूव ।
श्रीमानशेषजनसंग्रहणाय शेते रङ्गे
भुजङ्गशयने स महाभुजङ्गः ॥ ६ ॥
रङ्गास्तीर्णभुजङ्गपुंगववपुःपर्यङ्कवर्यं गतौ
सर्गस्थित्यवसानकेळिरसिकौ तौ दंपती

नः पती । नाभीपङ्कजशायिनः श्रुतिसुखै-
रन्योन्यबद्धस्मितौ डिम्भस्याम्बुजसंभव-
स्य वचनैरौतत्सदित्यादिभिः ॥ ७ ॥
घनकरुणारसौघभरितां परितापहरां
नयनमहश्छटां मयि तरङ्गय रङ्गपते ।
दुरितहुताशनस्फुरितदुर्दमदुःखमषीमलि-
नितविश्वसौधदुरपह्नववर्णसुधाम् ॥ ८ ॥
दुर्मोचोद्भटकर्मकोटिनिविडोऽप्यादेशव-
श्यः कृतो वाह्यैर्नैव विमोहितोऽस्मि
कुदृशां पक्षैर्न विक्षोभितः । यो माद्दान-
सिको महान्यतिपतेर्नीतश्च तत्पौत्रजा-
नाचार्यानिति रङ्गधुर्य मयि ते स्वल्पाव-
शिष्टो भरः ॥ ९ ॥ आर्तेष्वाशुफला तद-
न्यविषयेऽप्युच्छिन्नदेहान्तरा वह्न्यादेर-
नपेक्षणात्तनुभृतां सत्यादिवद्व्यापिनी ।
श्रीरङ्गेश्वर यावदात्मनिपतत्वत्पारत-

न्त्र्योचिता त्वय्येव त्वदुपायधीरपिहि-
तस्वोपायभावास्तु मे ॥ १० ॥ त्वय्या-
चार्यैर्विनिहितभरास्तावका रङ्गनाथ त्वं-
त्कैकर्यप्रवणमनसस्त्वद्गुणास्वादमत्ताः।
त्वय्येकस्मिन्नपि विजहतो मुक्तवत्साधन-
त्वं त्वच्छेषत्वस्वरसरसिकाः सूरयो मे
स्वदन्ताम् ॥ ११ ॥ कल्पस्तोमेऽप्यपा-
स्तत्वदितरगतयोऽशक्तिधीभक्तिभूम्ना[1] र-
ङ्गेश [2]प्रातिकूल्यत्तरणपरिणमन्निर्विघा-
तानुकूल्याः। त्रातारं त्वामभेद्याच्छरणा-
वरणातो नाथ निर्विघ्नयन्तस्त्वन्निक्षिप्ता-
त्मरक्षां[3] प्रति रभसजुषः स्वप्रवृत्तिं त्य-
जन्ति ॥ १२ ॥ [4]त्यक्तोपायव्यपायास्त-
दुभयकरणो सत्रपान्सानुतापान् भूयोऽपि

१. गतयः शक्तिधी. २. प्रातिकूल्यत्तरण. ३. स्त्वन्नि-
क्षिप्तात्मरक्षाः प्रतिरभस. ४. त्यक्त्वोपायानपायांस्तदुभय.

नोपासनदर्शनादिवचसामिच्छन्त्यभिन्नार्थताम् । ऽयक्त्यैक्याच्छरणागतिप्रपदनत्यागात्मनिक्षेपणान्यासादेषु तथैव तन्त्रनिपुणैः पर्यायता स्मर्यते ॥ १६ ॥
विश्वासायासभूम्ना[1] न्यसनभजनयोर्गौरवे को विशेषस्तत्सद्भावेऽपि धर्मान्तर इव घटते कर्तृभेदाद्विकल्पः ॥ तद्भेदो रङ्गशायिन्ननितरगतिताव्युत्थशोकातिरेकात्सद्विद्यादौ विकल्पस्त्वभिमतिभिदया तेन तत्रैकराश्यम् ॥ १७ ॥ ध्रुवमाधिंकृतिभेदात्कर्मवद्रङ्गशायिन्[2] फलति फलमनेकं त्वत्पदे भक्तिरेका ॥ शरणवरणवाणी सर्वहेतुस्तथासौ कृपणभजननिष्ठा बुद्धिदौर्बल्यकाष्ठा ॥ १८ ॥
कर्तव्यं सकृदेव हन्त कलुषं सर्वं ततो

१. भूम्नोन्यसन. २. वासिन्.

नश्यति ब्रह्मेशादिसुदुर्लभं पदमपि प्राप्यं
मया द्रागिति ॥ विश्वासप्रतिबन्धि[१] चि-
न्तनमिदं पर्यस्यति न्यस्यतां रङ्गाधीश
रमापतित्वमुभयं नागायमान्त्वं तव ॥१९॥
धीकर्मभक्तिरहितस्य कदाप्यशक्त्या
रंगेश भावकलुषप्रशान्तिरूपोक्तेः ॥ मन्ये
बलं प्रबलदुष्कृतशालिनो मे त्वन्मूलदे-
शिककटाक्षनिपातमाद्यम् ॥ २० ॥
अन्धोऽनन्धग्रहणवशगो याति रङ्गेश
यद्वत्पंगुर्नौकाकुहरनिहितो नीयते ना-
विकेन ॥ भुङ्क्ते भोगानविहितनृपः सेव-
कस्यार्भकादिस्त्वत्संप्राप्तौ प्रभवति तथा
देशिको मे दयालुः ॥ २१ ॥ उक्त्वा
धनञ्जयविभीषणलक्ष्यया ते प्रत्याख्य
लक्ष्मणमुनेर्भवता वितीर्णम् ॥ श्रुत्वा

१. प्रतिबन्धनिवर्तकं

वरं तदनुबन्धमदावलिप्ते नित्यं प्रसीद भगवन्मयि रङ्गनाथ ॥ २२ ॥ सकृदपि विनतानां सर्वदे सर्वदेहिन्युपनिषदभिधेये भागधेये विधेये ॥ विरमति न कदाचिन्मोहतो हा हतोऽहं विषमविषयचिन्तामेदुरा मे दुराशा ॥ २३ ॥ यावज्जीवं जगति नियतं देहयात्रा भवित्री त्यक्ताः सर्वे त्रिचतुरदिनम्लानभोगा नभोगाः ॥ दत्ते रङ्गी निजमपि पदं देशिकादेशकांक्षी किं ते चिन्ते परमभिमतं खिद्यसे यत्पुनस्त्वम् ॥ २४ ॥ अपि मुहुरपराधैरप्रकम्प्यानुकम्पे वहति महति योगक्षेमवृन्दं मुकुन्दे ॥ मदकलुषमनीषावज्रलेपावलेपाननुगुणयितुमीहे न प्रभूनप्रभूतान् ॥ २५ ॥ मातर्भारति मुञ्च मानुषचटून्हे देह लब्धैरलं

पिषु प्रलपितुं जिह्वेति जिह्वा मम ॥२८॥
त्वयि सति रङ्गधुर्य शरणागतकामदुघे
[१]निरुपाधिकप्रवाहकरुणापरिणाहवति ॥
परिमितदेशकालफलदान्फलदाकृतिकान्
कथमधिकुर्महे विधिशिवप्रमुखाननुका-
न् ॥ २९ ॥ ओमित्यभ्युपगम्य रङ्ग-
नृपतेऽनन्योचितां[२] शेषतां स्वातन्त्र्यादि-
मर्यामपोह्य महतीमाद्यामविद्यास्थिति-
म् ॥ [३]नित्यासंख्यविसीमभूतिगुणयो-
र्यायामनायासतः सेवासंपदमिन्दिरेश
युवयोरैकान्तिकात्यन्तिकीम् ॥ ३० ॥
आचार्याद्रङ्गधुर्य द्वयसमधिगमे लब्ध-
सत्तं तदात्वे विश्लिष्टाश्लिष्टपूर्वोत्तरदुरित-
भरं यापितारब्धदेहम् ॥ नीतं त्वत्कैस्त्व-

---

१. निरवधिक. २. नृपते नान्योचितां. ३. विसीमभूम-
गुणयो.

या वा निरवधिकदयोद्भूतबाधादिरूपं त्वद्भोगैकस्वभावं दयितमनुचरं त्वत्कृते मां कुरुष्व ॥ ३१ ॥ विधानं रङ्गेशादधिगतवतो वेङ्कटकवेः स्फुरद्वर्णां वक्त्रे परिकलयतां न्यासतिलकम् ॥ इहामुत्राप्येष प्रपन्नजनचिन्तामणिगिरिः स्वपर्यङ्के सेवां दिशति फणिपर्यङ्करसिकः ॥ ३२ ॥ ॥ न्यासतिलकं सम्पूर्णम् ॥

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥



| पृ सं | पं. | अशुद्ध पाठ | शुद्ध पाठ |
|---|---|---|---|
| १० | ७ | भवता | भवतां |
| ... | - | भक्ताना | भक्ताना |
| ११ | १ | स | स |
| ... | ११ | दर्शन | दर्शनः |
| १३ | ४ | दराडक. | दराडक |
| ... | ६ | सिन्तु | सिन्धु |
| १४ | २ | देवी | दर्वी |
| ... | १३ | भाखन्न | भास्वन्न |
| १७ | ३ | साकर्प | सांकर्प |
| .. | ८ | च्छन्दास्य | च्छन्दास्य |
| ... | ११ | न्माधपुच्छ | न्मायपुच्छ |
| ६८ | ५ | षाड्गुराय | षाड्गुराय |
| ... | १४ | द्धोषित | द्धोषित |
| १०३ | १२ | वहूना | वहूना |
| १०८ | ११ | कार्न्ग | कान् ग |
| ११२ | १५ | द्रद्रा | द्रुद्रा |
| ११५ | १३ | चीरो | वीरो |
| ११६ | १२ | सैका | सैका |
| ११९ | ४ | निदर्शने | निदर्शन |
| १२० | १२ | निर्भय | नर्भग |
| १२१ | १२ | शोभा | शोभा |
| १२३ | ७ | मोदस | मोदसे |
|  | ... | 'त्वा | त्वा |
| १३२ | १४ | कमा | कर्मा |
| १३५ | २ | त्वैयव | त्वेयव |
| ... | ... | मवस्था | मवस्था |
| ... | ८ | वृत्ति | वृत्ति |
| [illegible] | ३ | सता | सतां |
| [illegible]७ | ७ | नाथः | वासी |
| [illegible]६ | ११ | सता | सतां |
| १४१ | ५ | निविड | निविड |
| १४३ | १८ | माभीर | माभीर |
| ... | १५ | शङ्क | शङ्ख |
| १४४ | २ | शङ्क | शङ्ख |
| ... | १२ | म्वुधि | म्वुधि |
| ... | ... | द्रुमभि | द्रुमाभ |
| १४५ | ३ | र्थता | र्थता |
| .. | ३ | विवुधे | विवुधे |
| ... | १० | चन्द्रमसा | चन्द्रमसां |
| ... | ११ | विवुधे | विवुधे |
| १४८ | ३ | प्रजाना | प्रजाना |
| .. | ५ | स्तेपा | स्तेपा |
| १५१ | ४ | दशाना | दशाना |
| १५२ | ८ | लभता | लभता |
| १५६ | ३ | भुवनाना | भुवनाना |
| .. | ९ | विषम | विषम |
| .. | १० | पुरीसा | पुरिसा |
| १५८ | १२ | कन्जगा | कञ्जगा |
| १५९ | ३ | निष्टा | निष्ठा |
| १६० | १ | सर्वपा | मर्वपा |
| १६५ | १० | सत्य | सत्या |
| १६६ | ६ | वहित | महित |
| ... | १४ | प्रमृता | प्रभूता |
| ... | . | छाया | छाया |
| १६७ | ३ | प्पग्अरे | प्पग्अरे |
| १६८ | २ | घटिता | घटिता ॥ |
| १६९ | ३ | अतेह्रो | अतेह्रो |
| ... | ७ | त्रैलोक्य | त्रैलोक्या |
| १६९ | १० | तु ओसव | तु ओसद |
| १७० | १० | येषा | येषां |